blossom if it is not watered and nurtured carefully and adequately.

Historians of Sanskrit literature treat generally of the greatness of Sanskrit Literature up to the eleventh century A. D. and do not find enough material to carry on their narratives beyond this period. The dissensions of the Hindu Religions and the consquent want of Royal patronage and the frequency of the invasions by Mahammadans and other foreigners contributed to a very great extent for the decay, and gradual disappearance of authors of the first magnitude.

In places and localities which had been comparatively free from such foreign influences and when the Hindu principalities, however small they might be, continued to enjoy comparative peace and prosperity, we always find the necessary impetus for the growth of arts and culture which show themselves out by works of outstanding merit. The sixteenth and seventeenth centuries in South India are an instance to the point.

The petty principality of Tanjore enjoyed peace and plenty under the sympathetic and generous hands of the great Nayak Rulers who ruled Tanjore and the surrounding country from 1535 A. D. to 1675 A. D. No less than seventy authors of undoubted greatness flourished in this kingdom under the patronage of the Nayak Rulers.

Of these, the two great outstanding figures are the famous Appaya Dikshita and his equally famous scion, Nilakantha Dikshita, his brother's grandson.

Among Nilakantha Dikshita's contemporaries Rajachudamani Dikshita who was his fellow pupil under the great teacher Venkatesvara Makhi deserves special mention.

Rajachudamani Dikshita was born of Ratnakheta Srinivasa Dikshita, the father-in-law of the illustrious Appaya Dikshita, and Kamakshi. He was educated in all branches of Sanskrit learning firstly by Ardhanarisvara Dikshita and finally by Venkatesvara Makhi. Even from very early times Rajachudamani gave promise of his

future greatness and versatility. In consonance *with current practice he has pressed at least one* definite date in his literary career. In his Tantrasikhamani he says :

" धीमान्मान्ये शकस्याब्दे हायने चेश्वराभिधे ।
चूडामणिः कलयते यज्वा तन्त्रशिखामणिम् ॥"

This gives the date of composition of the Tantrasikhamani as 1559 Saka or A. D. 1636, the same *year in which his co-pupil Nilakantha* Dikshita wrote his famous Nilakanthavijaya Champu. As many as twenty-seven works representative of all branchs of learning appear to have been composed by Rajachudamani Dikshita.

The Rukminikalyana is a Kavya in ten sargas, dealing with the well-known Pauranik story, of the marriage of Rukmini and Sri Krishna. The ten sargas deal respectively with the description of the city Dvaraka, the love in separation of Sri Krishna, the arrival at Kundinapura of Sri Krishna on hearing the mental anguish of Rukmini, the carrying off of Rukmini to Dvaravati, the entry of Sri Krishna and Rukmini into Dvaravati, the marriage of Rukmini with Sri

Krishna, the description of the summer-season, the description of the rainy season, the description of the Sarad-season and the descriptions of the Hemanta and Sisira seasons.

In respect of descriptive detail, fullness of imagery and delineation of situations and characterisation of individuals, this poem compares quite favourably with those of Kalidasa and other Nature-poets.

The Sri Vani Vilas Press has done a distinct service to the scholar-world in bringing out for the first time a complete edition of this fascinating and delightful Kavya of the seventeenth century.

SRIRANGAM. *P. P. Subrahmanya Sastri.*

॥ श्रीः ॥

# ॥ रुक्मिणीकल्याणम् ॥



श्यामालकावल्लभभावमुद्रा-
सीमाविभागेन्द्रमणीशिलेव ।
रोमावली राजति यस्य मध्ये
सोमावतंसः स सुखाय भूयात् ॥ १ ॥

यः स्थाणुना केवलमाततज्यं
तन्वन्क्षणाद्धन्वपरं सभङ्गम् ।
सीताशुभाङ्कुरसमृद्धिमाधा-
त्कल्यै स भूयान्महिमा घनश्रीः ॥ २ ॥

जयाय भूयाज्जनकात्मजा सा
कुचेन कूलंकषगौरवेण ।

पतिव्रतौचित्यपरा पुरारि-
शरासगर्वं समकोचयद्या ॥ ३ ॥

मुधा रुदन्गर्भगृहे समेता-
मादातुमालिङ्गय हठेन राधाम् ।
कुर्वन्नखाङ्कान्कुचयोरमुष्या
मायाशिशुर्मङ्गलमातनोतु ॥ ४ ॥

रदाग्रसंचूर्णितरत्नसानु-
रजोभरैरङ्कजुषो रमण्याः ।
सीमन्तसीमान्तरमादधानः
सिन्दूरितं दीव्यति सिन्धुरेन्द्रः ॥ ५ ॥

उन्मीलयेदुक्तिभरं ममग्रं
वल्मीकजन्मा कविवल्लभो मे ।
वाणी सुवृत्ताप्यभिसारिणीव
यत्र यमुल्लङ्घितकाननालिः ॥ ६ ॥

उत्तालशब्दोचितचारुपाद-
न्यासा विचित्राभिनयप्रयत्ना ।
वैयासिकी भारतवामनाम्ना
सरस्वती दीव्यति लासिकेव ॥ ७ ॥

अनन्तशाखागमपक्षपात-
   जुषः प्रकृत्या हरितत्त्वभाजः ।
शुकस्य वाणी मुकुतैकलभ्या
   न कस्य वानन्दभरं विधत्ते ॥ ८ ॥

उदश्चितोच्चावचरागकाली-
   वीटीरसासारविवर्तमूर्तिः ।
सितायते सूक्तिरहो यदीया
   चित्ते स जागर्ति चिरं कवीन्द्रः ॥ ९ ॥

कालीमुखोद्यद्घनसारवीटी-
   सौरभ्यसौलभ्यजुषा यदुक्त्या ।
सिता सिताजायत लज्जितेव
   स कालिदासः स्तुतिगोचरः किम् ॥ १० ॥

यो मालतीमाधवयोगहृद्यः
   प्रायो रसालोचितभव्यपद्यः ।
आरामदेशः कवितालताना-
   मामोददोऽयं भवभूतिरस्तु ॥ ११ ॥

माघाय माघं भवतान्मुकुन्द-
   केलीकथावर्णनपुण्यभाजे ।

स्वर्गावरोधा इव यस्य वाचः
   स्वैरं भजन्ते सुरसार्थशय्याः ॥ १२ ॥

स भारविर्दीव्यति पादवृन्दै-
   र्मन्देहसंमोहनमादधानैः ।
धनंजयस्फूर्तिविधायिभिः स-
   त्पद्योदितैर्व्यञ्जितभावभेदः ॥ १३ ॥

बाणो धुरीणः कविपुंगवेषु
   प्रकाशतां भव्यफलोदयश्रीः ।
अमुञ्चमानोऽपि गुणं परेषां
   बिव्याध मर्माणि विशेषतो यः ॥ १४ ॥

मयूरनामा कविमल्ल एव
   चकास्ति सचन्द्रकलालिकीर्त्तिः ।
यः शारदाभ्यागममप्यवाप्य
   स्फुरत्कलापालि विजृम्भते स्म ॥ १५ ॥

क्षेमेन्द्रनाम्ने कविपुंगवाय
   श्रेमाणि भूयासुरलं यदीया ।
कवित्वधारा करमादधाना
   [illegible] विधत्ते मकरन्दपटा ॥ १६ ॥

पदेन दिव्यध्वनिभासुरेण
रसोर्मिमग्नान्रचयन्कवीन्द्रान् ।
दूरीकृतोन्मेषदुरीहकाव्यः
स वामनो भाति समुन्नतश्रीः ॥ १७ ॥

जडाशयानां हृदयं जगत्यां
यस्योदयायातितमां प्रसादम् ।
स एव सारस्वतमर्मवेदी
विभाति मौलौ विदुषामगस्त्यः ॥ १८ ॥

सर्गेषु सर्गेषु विचित्रतत्त-
द्वृत्तानुरोधेन विनैव यत्नम् ।
व्यक्तं व्यवस्थापितवृत्तिभेदाः
परे च वाचामधिपाः प्रयन्ताम् ॥ १९ ॥

भाति क्षितौ वासरभासुरोघैः-
प्रदीपचिह्नो भगवत्प्रपन्नः ।
अशेषभाषाकविताप्रवीणो
वादोद्भटो व्याकृतसर्वतन्त्रः ॥ २० ॥

ध्वन्यध्वनीनो दशरूपकोघैः-
क्रियाकृतश्रीरमणानुकारः ।

विख्यातिमान्विश्वजिता मखेन
श्रीश्रीनिवासाध्वरिसार्वभौमः ॥ २१ ॥

गाधेयवंशाम्बुधिसंभवो यो
वसिष्ठनिष्ठां विदधे लघिष्ठाम् ।
सुधाझरीसोदरवाग्विलासो
दीव्यत्यसौ केशवदीक्षितेन्दुः ॥ २२ ॥

विरिञ्चिकान्ताकरपद्मचञ्च-
द्विपञ्चिकानिक्कणवञ्चकश्रीः ।
षड्दर्शनीकेलिभरी चकास्ति
वागर्धनारीश्वरवादिमौलेः ॥ २३ ॥

शय्यारसालंकृतिरीतिवृत्ति-
वृत्तोज्झिता गूढपदप्रचारा ।
गुरौ च वर्णे कुरुते लघुत्व-
ममत्कृतिश्चौर्यरतिक्रियेव ॥ २४ ॥

अघो गुणानाकलयन्नशेषा-
नसज्जनः पद्मवदात्तगन्धः ।
राज्ञः पुरो दर्शितमौनमुद्रः
प्रायेण जायेत जलानुषङ्गी ॥ २५ ॥

दोषोन्मुखा दूरत एव सूर्या-
लोके वहन्तो बहु वैमनस्यम् ।
अह्नाय घूका इव दुष्टलोका
खलाभिरख्या बलिहृदविवेकैः ॥ २६ ॥

विशृङ्खलानां वितथैः खलानां
कामं करोतु क्षतिमत्र काव्ये ।
शाणोपलाघर्षणतः समिन्धे
सौरभ्यसंपन्नु चन्दनस्य ॥ २७ ॥

निकृष्य मेधानिकषोपलेषु
सुवर्णतत्त्वं परिशोधयन्तः ।
अलंक्रियार्थे सुदृशामवश्यां
कामं कलाशाः सुरसिनो भवन्तु ॥ २८ ॥

राज्ञः प्रसादं विरचय्य शश्व-
दङ्कूरयन्ती कुमुदानुकूल्यम् ।
समादधाना बहुधान्यवृद्धिं
नवा सभा भाति शरन्निकाशा ॥ २९ ॥

जल्पामि कौतूहलतो यदल्प-
धीरप्यहं तत्कवयः क्षमन्ताम् ।

यत्रेऽपि काव्ये धनुषीव शूराः
प्रायो गुणारोपपरा हि सन्तः ॥ ३० ॥

पवित्रकीर्तेः परमस्य पुंस-
श्चरित्रसंकीर्तनभाग्यलोभात् ।
साहित्यसिन्धुं सहसा तितीर्षोः
सांयात्रिकः स्यान्मम तत्कटाक्षः ॥ ३१ ॥

हरेरपारे गुणवारिराशौ
कणं गृणन्तोऽपि वयं कृतार्थाः ।
पृषन्ति सिन्धोः पयसां कियन्ति
घना गृहीत्वातिघना भवन्ति ॥ ३२ ॥

क्षुण्णेऽपि साहित्यपथे कवीन्द्रैः
पुण्येन जायेत नवार्थसृष्टिः ।
किं पद्मनाभाहृतकौस्तुभेऽपि
चिन्तामणिः सिन्धुपतौ न जातः ॥ ३३ ॥

आसीदशेषाहितभूमिपाल-
शासी सुनासीरसमप्रभावः ।
तिम्मावनीनायकवर्यमाम्बा-
जन्मा सुधर्मा चिनचेव्वभूपः ॥ ३४ ॥

यस्य त्रिलोकीमणिहारयष्ट्या
मध्ये महानायकभावभाजः ।
कदापि न त्रासकयेति युक्त-
मत्यद्भुता या(ऽ)तरलत्वशैली ॥ ३५ ॥

यत्नं विना यस्य यशोपदेश-
सुधानुलिप्ते सुरनाथसौधे ।
प्रायः प्रवालद्रवलेपभङ्गीं
प्रतापभूमा प्रकटीकरोति ॥ ३६ ॥

अजायतास्मादयमच्युतेन्द्रो
मूर्धन्यिकायां महिते मुहूर्ते ।
सामन्तचूडाभुवि केतकीनां
मैत्री यदाज्ञापनवीटिकास्ते ॥ ३७ ॥

यशःपयोभिर्भरितायदीयै-
र्ब्रह्माण्डभाण्डाद्बहिरुल्लसद्भिः ।
प्रायेण तादृक्षभुजप्रतापै-
र्वीभूयते भूरिनवप्रवालैः ॥ ३८ ॥

सत्रावतीर्णेषु यदाश्रितानां
सुत्रामसुत्स्नेषु सुधाशनेषु ।

युद्धाहृतैर्यः प्रतियोधियोधै-
श्चक्रे पुरीं शातमखीमशून्याम् ॥ ३९ ॥

आलक्ष्माशंकरधाम यस्मि-
न्दिने दिनेऽन्नं दिशति प्रजाभ्यः ।
जगत्प्रजारक्षणजागरूका
देवी दधौ चिह्नतयैव दर्वीम् ॥ ४० ॥

महान्ति दानानि महीसुराणां
कुर्वन्नखर्वाशयमानुपूर्व्यात् ।
श्रीरामसेतावनुहायनं यः
सिन्धौ शिवायावभृथं व्यधत्त ॥ ४१ ॥

दिने दिने दीनकृतानुकम्पो
दीनारजातानि दिशन्भृशं यः ।
ग्रामान्गुणग्रामनिकामरामा-
न्पारेसहस्रं प्रददौ बुधेभ्यः ॥ ४२ ॥

भूषामशेषां भुवनैकमूल्यां
भद्रासनं भव्यमणिप्रणीतम् ।

मायूरमध्यार्जुनकुम्भघोण-
श्रीदक्षिणावर्तमुखस्थलेषु ।
वृद्धाचले पञ्चनदे च सेतौ
सोपानसौधानतनिष्ट यो वा ॥ ४४ ॥

चिदम्बरे चित्परिणामभेदे
वैकुण्ठवीप्माजुषि वेङ्कटाद्रौ ।
श्रीकालहस्त्यादिषु चातनोद्यो
वृषाकपायीवरयोः सपर्याम् ॥ ४५ ॥

सौन्दर्यसंकेतनिकेतभूताः
सारस्यसर्वस्वनिधानसीमाः ।
सौभाग्यसाराः सुदृशः महत्त्वं
भुवोऽधिविश्वा विदधेतमां यः ॥ ४६ ॥

मूर्त्यम्बिकायामजनिष्ट तस्मा-
द्रतीशरूपो रघुनाथभूपः ।
अत्युक्तिरत्यद्भुतपुण्यवृत्तौ
यस्य स्वभावोक्तियशोऽपि नैति ॥ ४७ ॥

यदाश्रितानां यजने द्वयीपि
महीतुमन्तर्गृहमागतस्य ।

द्वारोपकण्ठे द्विपडिम्भदम्भा-
द्वाहा वलन्ते घनवाहनस्य ॥ ४८ ॥

पतीम्वरीतुं प्रधने यदीये
निर्जरमुखे निर्जरयौवताय ।
माल्यार्पणे मन्दतया प्रयाति
व्रीडाजडत्वं विटपी मघोनः ॥ ४९ ॥

भुजप्रतापस्फुरणैर्यदीयै-
रिदं विलीयेततमामितीव ।
विचिन्त्य हैमं जगदण्डभाण्डं
वेधा जलान्तर्विदधे सुमेधाः ॥ ५० ॥

सत्रे यदीये मृदुलान्नसेतु-
राज्यप्रवाहैरभितो विभिन्नः ।
पाकप्रकर्षात्कठिनैः पयोभि-
र्निबध्यते नित्यमिलानिलिम्पैः ॥ ५१ ॥

श्रीपारिजाताहरणाभिधानो
येनैकरात्रेण कृतो निबन्धः ।
अन्ये च वाल्मीकिचरित्रमुख्या
विश्वप्रतीताः विहिताः प्रबन्धाः ॥ ५२ ॥

अध्यास्य तञ्जानगरीममुष्मि-
न्सर्वंसहां शासति सार्वभौमे ।
श्रीराजचूडामणियायजूक-
श्रियं निबध्नाति हरेश्चरित्रम् ॥ ५३ ॥

अस्ति क्षितेराभरणं रमान्तः-
पुरी पुरी वृद्धिकरी यदूनाम् ।
वितन्वती द्वारवतीत्यभिख्यां
विख्यातिविस्तारवती जगत्याम् ॥ ५४ ॥

वसुंधरायां वसुधाधिनाथैः
सुखं धृतायां सुचिरं यदीयैः ।
प्राकारदम्भात्परिखापथेन
प्राप्तः समुच्छ्वासकृते फणीन्द्रः ॥ ५५ ॥

यस्याः समायोजितरैयकाद्रे-
कल्याणमुद्रामवैमि सालम् ।
रत्नार्गलारम्भितरम्यकीलं
मुखं मणीगोपुरमप्यमुष्य ॥ ५६ ॥

मध्ये मरुत्वन्मणिनिर्मितानि
शिरोगृहाणां शिखराणि यस्याम् ।

वियन्नदीवीचिभरानुषङ्गा-
दजस्रमञ्चज्ञलनीलिकानि ॥ ५७ ॥

व्रीडातिरेकाद्विनमन्मुखीनां
कन्यामणीनां परिणीतिकाले ।
हर्म्येषु यस्यामतिलङ्घिताभ्रे-
ष्वाप्त ध्रुवालोकनमन्वयासात् ॥ ५८ ॥

सौधेषु यस्यां सुदृशः शशाङ्के
गण्डोपधानभ्रमतः कपोलौ ।
तन्वन्ति राश्रीषु तदङ्गलग्नं
कस्तूरिकाचित्रकमङ्कदम्भात् ॥ ५९ ॥

सौधेषु यस्यां सुदतीमुखश्री-
चौर्याद्वाप्तध्वजशूलपातः ।
विधुः सुधावैभववीतबाधः
किणं बिभर्ति व्रणजं किमङ्कम् ॥ ६० ॥

रथानुधावद्रविवाजिवल्ग-
त्खुराग्रशीर्यत्कुरुविन्दशङ्काम् ।
पुष्णन्ति यद्गोपुरशृङ्गभूमौ
पूपोपलेभ्यः स्फुरिताः स्फुलिङ्गाः ॥ ६१ ॥

शीतालुभिर्यत्र शिरोगृहेषु
गाढं कुमारैर्घटितार्गलेषु ।
तागसु रुद्धासु चिरं तमिस्रा
मन्ये हिमर्तावभवन्महत्यः ॥ ६२ ॥

ध्वजाग्रभिन्नतुहिणाण्डभाण्ड-
निष्यन्दमानाम्बुनिरन्तरेषु ।
सौधेषु धारागृहसौख्यदेषु
जानाति यस्यां जनता न घर्मम् ॥ ६३ ॥

वियद्गुणो यत्र विहारभाजां
विश्रान्तिहेतोर्विबुधाङ्गनानाम् ।
प्रणीतमम्भोभवनं यदीयं
प्रासादमभ्रंकषशृङ्गमूहे ॥ ६४ ॥

मन्दाकिनीकल्पितमज्जनाभिः
पुरंदरान्तःपुरसुन्दरीभिः ।
वातायनद्वानि यदीयसौधे
वासांसि मन्ये विचलन्त्यः पताकाः ॥ ६५ ॥

बलद्विपद्वारणदानपङ्क-
नीलीविलिप्ता नियतं पताकाः ।

सौधेषु यस्यां सुरसिन्धुपूरे
विशोष्य वातो विशदीकरोति ॥ ६६ ॥

मन्दाकिनीवीचिमरुत्प्ररोह
दोधूयमानध्वजशाटिकासु ।
यच्चन्द्रशालासु न यान्ति मिथ्या
यत्नं रतान्ते व्यजनानिलाय ॥ ६७ ॥

प्रत्युप्तमुक्ताफलकैतवेन
प्रस्वेदिनी भास्करसंनिधानात् ।
प्रासादपङ्क्तिः प्रचलत्पताका-
व्याजादुदञ्चद्व्यजनेव यस्याम् ॥ ६८ ॥

मन्ये मणीतोरणमालिकां य-
त्प्रासादलोलां भवनेन्दिराभिः ।
परस्परं भाग्यविलोकनाय
प्रसारितामेव कटाक्षरेखाम् ॥ ६९ ॥

प्रायो बलारेः परिपन्थिवर्गे
पराजिते यत्र नृपप्रतापैः ।
चकार वेधा हरिचापवल्लीं
चञ्चन्मणीतोरणदाम सौधे ॥ ७० ॥

शोणाधरा यन्मणिसौधभूमौ
वीणागुणास्फालनलब्धवर्णा ।
पणाङ्कुरैरत्नग्रहणाय यत्नं
कोणाशया कोरकितं विधत्ते ॥ ७१ ॥

कोकारिरेखामणिकोणयष्ट्या
निक्वाणयन्त्यो निपुणं विपञ्चीम् ।
सुधार्द्रतन्त्रीस्वरविप्लवेन
सौधेषु यस्यां सुदृशस्त्रपन्ते ॥ ७२ ॥

संगीतसर्वस्वरहस्यभङ्गी-
सारस्यसारानुकृतावदक्षा ।
विद्धा नखैर्यत्र विलासिनीनां
वीणा विरावेण विरोदितीव ॥ ७३ ॥

पाणौ गृहीत्वा परिवादिनीं य-
त्पौराः स्फुरत्पञ्चमरागमुद्राम् ।
अहो श्रुतिग्रामपथानुसार-
प्राप्तप्रकर्षा जगति प्रथन्ते ॥ ७४ ॥

अन्तः स्फुरद्भिः परिखासु हर्म्यै-
रत्युन्नतैरायतमग्नभूमैः ।

चतुर्दशानां जगतामपास्त-
मीमांसाविवादेव समेधते या ॥ ७५ ॥

त्रिविक्रमस्यैकमधो निविष्टं
त्रिविष्टपे चोच्छ्रितमन्यमङ्घ्रिम् ।
परिस्फुरन्ती परिखाजले य-
त्प्रासादपङ्क्तिः स्मरयत्युदग्रा ॥ ७६ ॥

पाताललोके परिखाजले या
हर्म्येण हन्त प्रतिबिम्बितेन ।
पराजितायाः फणिराजधान्याः
प्रायेण मौलौ पदमादधाति ॥ ७७ ॥

पुङ्खानुपुङ्खस्फुरदात्मलक्ष्मी-
वीक्षाकृतेऽधोमुखतां व्रजन्ती ।
विभ्राजते वृत्रजितः पुरीव
वियद्धुनीवीचिषु बिम्बिता या ॥ ७८ ॥

विनिर्जिता निर्जरराजधानी
वियत्तटिन्यां प्रतिबिम्बदम्भात् ।
निरीक्ष्यतेऽन्तर्वसुगोपनेन
निमज्जितेवाम्बुनि यत्समृद्ध्या ॥ ७९ ॥

अधोविसर्पन्मणिगोपुराग्र-
मणिप्रभालीमयशृङ्खलासु ।
व्यालम्बिता या वरुणाभिगुप्ता
निधिः किलास्ते निम्बिशाङ्कृतानाम् ॥ ८० ..

शङ्के यदुत्तुङ्गशिरोगृहेषु
कण्डूयिनोद्घाय कपन्कपोलौ ।
महेन्द्रदन्ती मदपङ्कलेपैः
सपद्मको भाति सरोजरागैः ॥ ८१ ॥

आराममीमासु महीरुहाणा-
मम्भोजबन्धौ विचरत्यधस्तात् ।
यन्नातपत्राणि यदूद्रहानां
प्रायेण नु मामनविहृमायम् ॥ ८२ ॥

मनोज्ञमन्दरिमनपाङ्क्तिकाभिः
शम्भ्रूयद्भिः शशिकान्तकुम्भैः ।
जलं विना यत्र विलासवत्सः
सिञ्चन्ति लीलायनवाक्यमालान् ॥ ८३ ॥

प्रवालगुच्छारव्यपराग-
वैदूर्यनागदमनवनीडैः ।

क्रीणन्ति गोमेधकपुष्यरागैः
　फलानि यस्यां किल पौरबालाः ॥ ८४ ॥

तामावसन्द्वासवधामरम्यां
　तत्तादृशैश्वर्यनिधानसीमाम् ।
ररक्ष रक्षोभयतस्त्रिलोकीं
　सर्वामिमां सात्वतसार्वभौमः ॥ ८५ ॥

यं नवोढेव पुराणवाणी
　व्यनक्ति यं वाङ्मनसातिदूरम् ।
परात्परं तं परिमेयवाचो
　वयं कथं वर्णयितुं प्रगल्भाः ॥ ८६ ॥

कदाचिदेकान्तकृतादरोऽसौ
　दामोदरो दारुकदत्तहस्तः ।
सर्वर्तुसांनिध्यसमेधमान-
　नेत्रोत्सवं निष्कुटमाससाद ॥ ८७ ॥

मन्दानिलान्दोलितमञ्जुवल्ली-
　दोलाविहारोदितदोहदाभिः ।
भृङ्गीभिरङ्गीकृतमारवीर-
　संगीतभङ्गीमरसोपकण्ठम् ॥ ८८ ॥

प्रमूनतल्पाद्गतसेन्दुकान्ति-
संश्लेषसंपर्कचमत्क्रियाभिः ।
निष्यन्दमानैर्निकटेन्दुकान्तै-
र्नित्यं नदीमातृकतां भजन्तम् ॥ ८९ ॥

मन्दारपुष्पस्तबकापदेशै-
र्माङ्गल्यकुम्भैर्मधुवारिपूर्णैः ।
आरावनीनायकयोरजस्र-
धीराभिषेकं विदधानमाराम ॥ ९० ॥

निलीय पुष्पस्तबकोदरेषु
निष्पन्दपुष्पंधयकैतवेन ।
निद्राति यस्मिन्निभृतं तरूणां
छायाम्भोल्लुनजाड्यकान्ताम् ॥ ९१ ॥

तत्पादपामोदतरङ्गिताभि-
रालिङ्गिताः कल्पलतावलीभिः ।
कल्पाघ्रया यत्र सुमोद्गमत्व-
प्रख्यातिभाजो विटपाः प्रथन्ते ॥ ९२ ॥

दूरादसौ दोहदसाधितानां
पाथाम्बुजानां परिचिन्त्य पापान् ।

संवाहनायेव शयानशोकाः
  प्रसारयन्त्ये किसलानि यत्र ॥ ९३ ॥

शङ्के पदाम्भोजतलाभिघाता-
  त्कङ्केलिसालैरुपदर्शितानाम् ।
करस्फुरत्कान्तिमुषां दलानां
  कान्ताजनो यत्र करोति भङ्गम् ॥ ९४ ॥

प्रसूनलावीजनपाणिपद्म-
  स्पर्शोत्सवाय स्पृहयन्निवारात् ।
पुनः पुनर्यत्र रसालमालः
  पुष्णाति पुष्पस्तबकाननेकान् ॥ ९५ ॥

कुरण्टशाखी कुटिलेक्षणानां
  कुचेषु कूलंकषतापशान्त्यै ।
गुलुच्छकुम्भोच्छलितैर्मरन्दै-
  राभाति यस्मिन्नभिषिच्यमानः ॥ ९६ ॥

हसन्मुखीरिन्दुमुखीः सलील-
  मालोक्य पुंनागगणो यदीयः ।
वल्गुस्फुरत्पुष्पस्तबकापदेशा-
  दुदीर्णमन्दस्मितवद्विभाति ॥ ९७ ॥

यदृच्छया यत्र विलासवत्यो
  दृशा मृगान्त्यस्तिलकं जहुं च ।
आपादमापूर्णमनङ्गबाणै-
  रानम्यते हन्त हठावकीर्णम् ॥ ९८ ॥

प्रायः प्रियालः प्रमदाजनाना-
  माकर्ण्य गीतीरमृतैकरीतीः ।
मनःस्फुरत्कोरकसक्तभृङ्गी-
  संगीतभङ्ग्यानुकरोति यस्मिन् ॥ ९९ ॥

कण्ठामणीनां नवकर्णिकाराः
  श्रोतुं गिरः श्रोत्रसुखायमानाः ।
प्रत्यग्रपुष्पस्तबकावनम्राः
  प्रायेण मौलिं नमयन्ति यस्मिन् ॥ १०० ॥

उपान्तवल्लीभवनोदरेषु
  निशाग्रनिभामसुप्ता रतान्ते ।
सीमन्तिनीर्यत्र हि सिन्दुवारा
  दशन्ति मूलैरपिरोन्निहानैः ॥ १०१ ॥

आस्वाद्य यस्मिन्मृणालोपमानं
  मुग्धाधरं मुग्धविलोचनानाम् ।

वक्त्रेषु तासां वकुला मधूनि
भूयः स्वयं पुष्पमुखैर्दिशन्ति ॥ १०२ ॥

मनस्विनीनां मदरागतैल-
श्चमत्कृता चम्पकदीपपङ्क्तिः ।
प्रायेण यस्मिन्परितः षडङ्घ्रि-
परम्परां संततमं निरुन्धे ॥ १०३ ॥

विना मिलिन्दालिगुणानुषङ्ग-
चमत्क्रियां चम्पकपुष्पबाणैः ।
मनोभवो यत्र विचित्रशक्ति-
र्मनस्विनीमानभिदां तनोति ॥ १०४ ॥

पार्थं पुष्परसैस्तथार्जुनकृतप्रीतिस्तनोत्यर्जुनः
पुंनागः पुरुषोत्तमस्य तनुते पुष्पोपहारक्रियाम् ।
धत्ते मन्मथ एष मन्मथपितुर्दिव्यैः फलैः प्रीणना-
मित्याकर्णितदारुकोक्तिरदधादीशः परां निर्वृतिम् ॥

इति श्रीदन्तिपोतदिवाप्रदीपाङ्कस्थयज्ञरत्नखेटश्रीनिवासदीक्षित-
तनयस्य कामाक्षीगर्भसंभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरण-
सहजतातद्वयविद्यावैशारदस्य श्रीराजचूडामणिदीक्षि-
तस्य कृतिषु रुक्मिणीकल्याणनाम्नि काव्ये
प्रथमः सर्गः ॥

विभोर्विचित्रं दृशि बाष्पवृष्टिभि-
  र्विसृत्वरीभिः समभावि मत्वरम् ॥ ४ ॥

वियोगघर्मांशुविवर्धितोष्मणो
  महीभृतस्तस्य मनस्तटे भ्रमन् ।
विदर्भजाकैशिकविभ्रमाम्बुदो
  व्यजृम्भयद्बाष्पभरं नु निर्भरम् ॥ ५ ॥

विवेकराकाविधुमाशयागते
  वधूमणीवेणिसुधाविधुंतुदे ।
प्रसह्य सौ सत्यमभज्जदञ्जसा
  विभुर्मुहुर्मोहमहार्णवाम्भसि ॥ ६ ॥

तदा हृदाकाशपथावतारिणा
  तदीयवेणीतमसा तिरोहिते ।
विवेकशीतत्विषि किं विभोस्तमो
  विमोहसंतानमयं व्यजृम्भत ॥ ७ ॥

यदा तदक्षिभ्रुवमिन्दिराधिभू-
  र्निनाय चिन्ताध्वनितान्तपान्थताम् ।
स चक्षुषाप्यक्षपति स्म तत्क्षणे
  स्मरस्य जैत्रं सशरं शरासनम् ॥ ८ ॥

अमुष्य पद्मं किल नाभिजातमि-
त्युपेक्ष्य तन्वीमसृजत्युत्पलम् ।
स्मरोऽभिजातं स्मृतमायुधं यथा-
विना न मुख्यं करणं मनःश्रयः ॥ ९ ॥

मनोभिधानो मधुविद्विषो सुतो
विलासहासामृतवीचिषु भ्रमन् ।
विदग्धलीलातिलकस्य नासिका-
विभूषणं स्म यदिदं व्यगाहत ॥ १० ॥

तदुष्णनिश्वासविलोचनानन-
स्मृतिक्षणेषु प्रमदाजनमाक्षिपन् ।
दिवो मनःस्मारहरो निशाचरो
वियोगिबिम्बो विरहेन यो नु वा ॥ ११ ॥

तदागमो लोकदृगालयोऽपर-
द्विपाम्बुजम्पापरिवृत्तिमावहन् ।
यथेष्टमाभिस्य च हारयष्टिका-
मगोह गाढं स्मरनापगाऽन्तम् ॥ १२ ॥

निरम्बरध्याननिशाविनीमनी-
मनोहरागमनि मानसं विभोः ।

अथाप मुक्तामयतामथ क्षणा-
   द्दधार तादृक्करलात्मतामपि ॥ १३ ॥

तदग्रहारैकतलं तलोदरी-
   मणेः समाक्रामदुरोजमण्डलम् ।
करग्रहं कर्तुमियेष तन्मनो
   व्यवस्थितिः कामवशंवदेषु का ॥ १४ ॥

धराधरं यः स्वकरोदरे पुरा
   दधार सोऽयं दनुजान्तकस्तदा ।
पयोधरं पद्मदृशः स्मरन्नपि
   श्रमोत्तरश्वसितानिलोऽभवत् ॥ १५ ॥

विदर्भपाठीनविलोचनामणेः
   पयोधरेऽथ स्मृतिपद्धतिस्पृशि ।
स राजहंसः सहसैव मानसे
   समेधितौत्सुक्यभरोऽभवत्तराम् ॥ १६ ॥

नतभ्रुवोऽस्या नवरोमराजिकां
   नयत्सु भुग्निम्नलिनेक्षणे मनः ।
कृपामपास्याशु कृपाणवल्लरीं
   रयेण पाणौ रतिमानिरादधे ॥ १७ ॥

निरास्थदास्थां निजचक्रके तदा
ततो विधत्तेऽनुशयस्थितिं नु तत् ॥ २२ ॥

अवाप्य काञ्चीस्थलमङ्गनामणेः
समेत्य मुक्तावलिभिः सदा चिरम् ।
अथोरुरम्भापरिरम्भसंभ्रम-
स्पृहामहो भूमिभृदाशयो दधौ ॥ २३ ॥

अनर्घजङ्घाधिगतिं वधूमणे-
रनन्यतोवैजयकाहलीगतिम् ।
पदद्वयप्राप्तिमपि क्रमोद्गता-
मुदारपद्मोपगतिं सदाशयः ॥ २४ ॥

समानशीलेषु समग्रमिन्द्रिये-
ष्वखर्वनिर्वेदकृतार्तिपूर्तिषु ।
अतुल्यदस्याः कथया हरेः श्रुतिः
कुतो व्यवस्था कुटिलात्मनां भवेत् ॥ २५ ॥

अनारतं हन्त निनिन्द नारदं
शुभोपयोक्तिं शुकमप्युपैक्षत ।
न पुण्डरीकेऽपि स नर्म निर्ममे
प्रियेऽपि न प्रीतिमुपालभत योगिनः ॥ २६ ॥

तथाविधोऽसौ ददृशे दशा जनैः
कृशोदरीवाहगयोगकर्शितः ॥ ३१ ॥

जनार्दनो निर्दयमर्दिताशयः
स्वजन्मना हन्त सुगन्धिधन्वना ।
भवेत्प्रमोदाय पराजयः सुता-
न्निति प्रतीतिं निरधारयन्मुधा ॥ ३२ ॥

पुरा पुरारेरपि योऽभिनद्धनुः
स एष वेषान्तरसंवृतः प्रभुः ।
भवाभिभूतादतनोरपि क्षतिं
बभाज कालो हि बली बलीयसाम् ॥ ३३ ॥

पुरः स्फुरत्युत्पलिनीविटे हरि-
र्दधौ दुरन्तां हृदयंतुदां व्यथाम् ।
अदक्षिणाक्षिस्फुरणे हि तत्क्षणा-
द्भवन्ति भव्येतरभाजनं जनाः ॥ ३४ ॥

अमुष्य मन्दं चलितेऽपि मारुते
मनस्यमन्दं समभावि शङ्कया ।
तनूभुवापि प्रतिकूलता दधे
क्व राशि मौम्यं प्रतिकूलतां गते ॥ ३५ ॥

व्यधत्त वातंधयवल्लभं हरो
विभूषणं विभ्रमतल्पमच्युतः ॥ ४० ॥

समुत्तरङ्गा दिविषत्तरङ्गिणी
सनीडसंचारकरं निशाकरम् ।
निमज्जयेन्नीरभरे क्षणं न किं
कुतोऽथ वा स्यादुडुपस्य मज्जनम् ॥ ४१ ॥

घनावलीव क्षणमर्धमेव वा
कठोरवृत्तिं क्षणदाकुटुम्बिनम् ।
पिधाय जायेत मम प्रियाय किं
मुदेऽथ वा स्यात्किमु मेघसंततिः ॥ ४२ ॥

विधुं तुदन्तं किरणैर्वियोगिनो
विधुंतुदो हन्त गिरन्विशृङ्खलम् ।
परोपकारप्रवणा न जिह्मगा
इति प्रथां किं नु मुधा विधास्यति ॥ ४३ ॥

वधूकुचाश्लेषविशेषवञ्चितो
विधुंतुदः सामिवियोगविक्लवः ।
वियोगिपीडैकविधाविशृङ्खलं
ग्रसेत यद्वा क्षणदाधिपं कथम् ॥ ४४ ॥

दहन्ति हा हन्त मरुत्सुता विधो
कराङ्कुराकारभृतः कणा यतः ॥ ४९ ॥

मृगभर्तृता नो शशलाञ्छन त्वया
विषानिमेषाशनयोर्विशिष्यते ।
तथापि चायानुकृतिं करोषि किं
न जन्मवक्रा मलिनानुवर्तिनः ॥ ५० ॥

सुधेन्दिरास्वस्तरुकौस्तुभादिकं
परःसहस्रं सृजतास्पयोनिधिः ।
तथापि दोषाकर दुर्यशो निजं
न मार्ष्टुमीष्टे भवदीयसृष्टिजम् ॥ ५१ ॥

सुधानलभ्रान्तिकरैः करोत्करै-
स्तुषारभानो तुदसि प्रसीद मे ।
तदास्यदास्यं तव दापयाम्यहं
तया सुतभ्रेत्सुकृतैः पुरा कृतैः ॥ ५२ ॥

कुतो विरोधं कुरुषे वृथा विधो
श्रियोऽनुजः स्यालतयासि संमतः ।
भजानुकम्पां भवता विनापरः
समीक्ष्यते नो सहजापतिं द्विषन् ॥ ५३ ॥

न पञ्चबाणीभरणाद्यदेकदा
पतन्ति ह्य हन्त परःशतं शराः ॥ ५८ ॥

अनङ्ग ते पञ्चशराभिधा मुधा
विमुञ्चसे यद्विशिखान्परःशतम् ।
मधुर्मधुद्वेपिणि मय्युत क्षुधा-
शराग्नु दत्ते शतशस्तथाधुना ॥ ५९ ॥

पुरद्रुहा फालविलोचनानले
पुरा भवन्तं मदनेन्धनीकृतम् ।
सुधाभिरुज्जीवयति स्म किं न्वदः-
शिरःस्थितस्त्वत्सुहृदिन्दुपातकी ॥ ६० ॥

निशाकरस्त्वत्सचिवो निजामृतै-
रमीलयिष्यद्दृशमूष्मणा न चेत् ।
अधक्ष्यदद्धा त्रिजगत्प्रभुः पुन-
र्भवन्तमङ्ग स्मर पाम्यपरम् ॥ ६१ ॥

द्वयोः समा वां सुमनोधरेषुता
तथा सुपर्वाश्रयधन्वधारिता ।
तथापि दग्धोऽसि दृशा हरेण य-
थदेतदप्यन्यवधोदितं फलम् ॥ ६२ ॥

प्रभञ्जनायुग्जनताविभञ्जना-
　　त्त्वदाञ्जनेयो जनिमासदत्कथम् ॥ ६७ ॥

अवैमि मन्दानिल चन्दनाचलो
　　भवत्प्रसूर्भाग्यविपर्ययेण नः ।
पितामहप्रीतिमता हनूमता
　　निपातितः सेतुकृते न नीरधौ ॥ ६८ ॥

परास्तमेरुस्थिरतो भवान्पुरा
　　कृतोऽद्य मेऽरुःस्थिरताकृतोद्यमः ।
समीरणानक्षिगतः सदा नृणां
　　गतोऽधुना मेऽक्षिगतस्त्वमाः कथम् ॥ ६९ ॥

अनक्षिलक्ष्यो हरिणाश्व याधसे
　　वियोगिनो विक्रमिणां न स क्रमः ।
पथि त्वमक्ष्णः पतितो यदि क्षणं
　　तदीक्षणोल्कातरलीकृतो भवेः ॥ ७० ॥

वियोगिनां मारुत वीक्षणोल्कया
　　विपत्तिशङ्की निजवाहनस्य ते ।
अनक्षिलक्ष्यत्वकथोपदेशने
　　सखे यताचार्यकमाचचार किम् ॥ ७१ ॥

स्मरानलाद्‌भुजलोदयान्नृणां
हुताशनादपि इति प्रथा यथा ।
स्मरानलोत्पादनतः समीर ते
हुताशनोत्पादकताकथा तथा ॥ ७२ ॥

अतनुशरामविद्धवपुरेत्य विदर्भभुवं
सुखमनुभूयतेऽद्य हरिणाममरेण चिरम् ।
इति स निशम्य केलिवनपालिकपूर्ववचना-
न्यभजदमन्दमङ्गमचिरेण हरिः प्रमदम् ॥ ७३ ॥

इति श्री[illegible]-
[illegible]-
[illegible]-
[illegible] काव्ये
द्वितीयः सर्गः ॥

## तृतीयः सर्गः ॥

---

अथालुलोके हरिरद्भुतैक-
निदानमानन्दनिधानमक्ष्णोः ।
उद्गीर्णकर्णामृतसूक्तिगुम्फैः
क्रीडाधुरीणं धुरि कीरधुर्यम् ॥ १ ॥

गारुत्मतग्रावगणाभिराम-
कायस्फुरत्कान्तिपरम्पराभिः ।
वतंसदूर्वाङ्कुरवारशङ्कां
विश्राणयन्तं विपिनेन्दिरायाः ॥ २ ॥

प्रवालभङ्गद्युतिभङ्गचुञ्चु-
चञ्चूपुटीचञ्चदभीशुपुञ्जे ।
आरामशोकं कलमाग्रशङ्कि
हसन्तमच्छच्छविभिश्छदाग्रैः ॥ ३ ॥

स्पृष्टस्य जन्तोः पुनरुद्भवं किं
संभावयत्सात्वतसार्वभौमात् ।

पद्मासनः सद्मगते मयि प्रा-
क्पदक्रमव्युत्क्रमशङ्किचेताः ।
श्रद्धापदिश्याशु बभूव शिष्टा-
नध्यायमध्यापनतो निवृत्तः ॥ ९ ॥

श्रुतिस्वरग्रामविशेषजाति-
रागव्यवस्थाविषयेऽपि वादे ।
सद्यः परिच्छेदसममधीक्ष्य
तुष्टाव तुष्टा वनिता विधेर्माम् ॥ १० ॥

अदभ्रनृत्तभ्रमिविभ्रमेषु
संध्याभ्रकुंसो भ्रमतः समं मे ।
अम्भोत्तरीयाञ्चलमारुतेभ्यः
पक्षानिलाय स्पृहयत्यजस्रम् ॥ ११ ॥

चरन्तमग्रे चतुरं गिरं च
किरन्तमूरीकृतमाधुरीकम् ।
एणाङ्कचूडैणविलोचना मां
वीणां विहायाशु करे करोति ॥ १२ ॥

अकृत्रियाहार्यमनङ्गजेतुः
शय्याङ्कलेशच्छलरत्नदीपम् ।

समीरचारेऽपि सर्वमनस्यो
निरन्तरध्याननिविष्टचेताः ।
मदा(ऽऽ)श्रमस्थः समुपैषि किं त्वं
रमेश कान्तारहितस्य वृत्तिम् ॥ १८ ॥

वलक्षभावो भवतो व्यनक्ति
नाथ स्मरेपोर्नवलक्षभावम् ।
अनङ्गतापं च यताङ्गतापो
विनैव वाचं विशदीकरोति ॥ १९ ॥

अये जगन्नाथ सदा(ऽऽ)नयेन
लक्ष्मीं नवाम्भोजभवां दधानः ।
स्थाने भवान्द्वेष्टि तुषारधाम्ने
कथं नु चक्रे कलयत्यनास्थाम् ॥ २० ॥

नरेन्द्रभूरच्युत रुक्मिणी या
तस्यामपीच्छा तव चेदुदीता ।
विधाय पृष्ठे विहगेन्द्रवत्सां
नयामि किं ताम्यसि लोकनाथ ॥ २१ ॥

इतीरयन्तं शुकमीरितज्ञं
पत्युर्यदूनां प्रतिवक्तुमिच्छोः ।

हास्यानि वाण्या छपने चिकीर्षो-
　　स्तिरस्करिण्या त्रपया बभूवे ॥ २२ ॥

अपाभरच्छद्मतिरस्करिण्या-
　　मपाकृतायाममनमायुधेन ।
वाणी नटी तद्वदने विधातुं
　　पदक्रमं प्राक्रमत श्रमेण ॥ २३ ॥

विरमंस्तुष्प्रविवक्षिताव वर्त्यं वः
　　विवृण्वतः [illegible] ।
प्रभम्य किं ते [illegible]-
　　न्नवगाहनिमन्तरेव ॥ २४ ॥

यदा स्वनै कर्षिमयर्वाचयभी मा
　　कथामभङ्क्षे कथिता तदैव ।
कृतापि नाद्यस्तुसुमास्त्रबाण-
　　विधामिता विरमति स्म लज्जा ॥ २५ ॥

आस्ता प्रसङ्गोऽयमनेन किं ते
　　प्रयोजनं गुणविशोधनेन ।
कन्यानुयोगेन भवत्कृते
　　पर्युन्मुखत्वं भजते मनो मे ॥ २६ ॥

इतीरयन्तं हरिमेष कीरो
गिरं सुधासारकिरं बभाषे ।
अज्ञातमप्यस्ति जगत्सु किं ते
वात्सल्यतो मां वरदानुयुङ्क्षे ॥ २७ ॥

राजत्यनर्घा नगरी रमाया
नाट्यस्थली कुण्डिननामधेया ।
पत्रावलीव प्रथते विभक्त-
वर्णस्थितिर्या वसुधाङ्गनायाः ॥ २८ ॥

सौधेषु सौधेषु शुचिस्मितानां
सौन्दर्यमालोक्य सुरावरोधाः ।
आश्चर्यतो निश्चलतामवाप्ता-
श्चित्रश्रियं यत्र चिरं भजन्ते ॥ २९ ॥

सौरभ्यलोभात्सुदतीकचाना
भ्रमत्सु दूरे भ्रमरप्रपञ्चः ।
असंशयं नीलिमसंप्रदाय-
मध्येतुमन्ते वसतीव यस्याम् ॥ ३० ॥

चकोरनेत्रा चरणारविन्द-
स्वभावशोभासुलभावमानाः ।

सौधा यदीया वसुधासुधानां
   सिताभ्रुवानां सहिता रसेन ।
सुधां सुधांशोर्जडिमाप्तुस्यै
   प्रायः पताकारसनैर्लिहन्ति ॥ ३६ ॥

ऊधःसु यत्रोरुषु दुग्धसिन्धु-
   र्गूढो गवां कुम्भसमाहिभीतः ।
राकाविधुं राहुभियापहाय
   पुण्ड्रेक्षुकाण्डेषु पुनः सुधापि ॥ ३७ ॥

रामायणाभ्यासकृतोऽपि यत्र
   रामानुरागप्रवणा न पौराः ।
न जानते भीमगदाभिघात-
   कथां तथा शीलितभारताश्च ॥ ३८ ॥

भजन्ति युक्तं प्रमदं गुरूक्तौ
   यत्पौरलोका विबुधा यदेते ।
इदं तु चित्रं यदमी नितान्तं
   कुर्वन्ति काव्योक्तिषु कौतुकानि ॥ ३९ ॥

नान्यत्र पाथोरुहनालदण्डा-
   दाकर्ण्यते कण्टकसंकथापि ।

हा विस्मृतं कान्तदृढोपगूढां
तन्वीं तनूमप्यपहाय यस्याम् ॥ ४० ॥

पातालसंलक्ष्यफणिप्ररोहः
स्फुरत्प्रवालः सुमनोज्ज्वलाग्रः ।
मनोज्ञमुक्ताफलमांसलो य-
त्सालो मणिच्छाययुतः समिन्द्धे ॥ ४१ ॥

कल्पद्रुपुष्पैः कलिताधिवासं
महेन्द्रदन्तीन्द्रमदाम्बुपङ्कम् ।
सौधाग्रलग्नं सुदृशो यदीया
गृह्णन्ति दिव्यैणमदभ्रमेण ॥ ४२ ॥

धृत्वा कराग्रेण दृढं किरीटं
भुग्ना समुत्तम्भितपूर्वकायाः ।
पाकारिसौधाग्रजुषः सुधाशाः
पश्यन्ति यत्सौधशिखा प्रयाणात् ॥ ४३ ॥

आवासयत्यत्र पुरीमणीं ता-
मावासयन्सर्वदिशो यशोभिः ।
सेवामनायासमवाप्तभूपो
भूपालको भीष्मपदाभिधेयः ॥ ४४ ॥

न भोगरीतिः प्रथते द्वितीति
　विहाय शीतांशुकला विहायः ।
नतभ्रुवः पादनखा बभूवु-
　स्तादृशदृश्याः कथमन्यथामी ॥ ५४ ॥

प्राप्तुं तदङ्घ्रिद्वयकान्तिमाद्यौ
　प्रवालपालिः कथमेतु रागम् ।
दिनैः कियद्भिर्विजहाति भूयो
　दृढानुरागा न हि पल्लवालिः ॥ ५५ ॥

पदाभिधे पद्मदृशः प्रवाल-
　पद्मौ भजन्तौ किल माधवार्कौ ।
तत्संनिधौ तां परमभ्युपाते
　स्थिरा न हि श्रीर्मधुसक्तिभाजाम् ॥ ५६ ॥

वृत्तादृशौ तारतदीयजङ्घा-
　चातुर्यचौर्यात्किमु शालिपङ्क्तेः ।
क्षतिं कठोरैः क्रकचैर्भवित्रीं
　संचिन्त्य गर्भाः सहसा स्फुरन्ति ॥ ५७ ॥

ऊरुस्तरुण्याः स्वयमुर्वशीतो
　रम्भावमानं रचयेत युक्तम् ।

स्वच्छायत्युज्ज्वलचित्रलेखो-
  चितं सदा(ऽऽ)भोगमसौ कथं वा ॥ ५८ ॥

तदञ्चितस्यन्दनचक्रशोभ-
  मुदग्रपुंनागविलासयोग्यम् ।
नितम्बवत्या निचितं नितम्ब-
  बिम्बं महीसुत्कटकं विशङ्के ॥ ५९ ॥

कथं नु सा मेखलया कवीन्द्रै-
  स्ताडङ्कनितम्बस्तुलितस्तरुण्याः ।
यदेकदेशे परमेतदीये
  विभूषणत्वेन विलम्बतेऽसौ ॥ ६० ॥

पयोधरोत्सेधभवो विमर्दो
  भवेदिहापीत्यनवेक्षमाणम् ।
मध्योऽभवत्क्षाम मृगीदृशोऽस्या
  विचारभाजोऽपि भवेद्विमोहः ॥ ६१ ॥

पयोधरप्रावरणोपरोध-
  प्रतिक्रियासामहमम्बरं किम् ।
आश्रित्य मध्यं वलिजुष्टमस्या-
  स्तदाकृतिं संप्रति सम्पतीति ॥ ६२ ॥

सरोजकुम्भावुपकण्ठलोल-
नक्षत्रमालाललितौ नताङ्ग्याः ।
स्वर्णांगयोर्मस्तकरीतिमस्याः
स्वैरं भजन्ते सुरतोपभोग्याम् ॥ ६३ ॥

वक्षोरुहौ वारिजलोचनायाः
सुरालयश्रीमरमाहरेते ।
समस्तचक्रद्विजसंपदं च
नन्वेषमुद्वृत्ततमस्य वृत्तिः ॥ ६४ ॥

लक्ष्मीविलासालयकोशलक्ष्मीं
चक्रश्रियं भूमिभृतां रमां च ।
उरोरुहावुत्पललोचनायाः
प्रायेण लब्ध्वा भवतः प्रवृद्धौ ॥ ६५ ॥

वेळातिगाढेनकरोपमर्दा-
वप्यङ्गनारत्नकुचौ न कोकौ ।
अम्भोजकोशावपि तु ध्रुवं य-
न्निशानुषङ्गे भजतो न भेदम् ॥ ६६ ॥

कुचाचलप्रान्तभवौ कुमार्याः
पाहाव्यलावण्यरसप्रवाहौ ।

शृङ्गारराजोपचितोरुरम्भा-
समीपसारस्यकृतौ विभातः ॥ ६७ ॥

अब्जः किलैको मुखतामवाप्य
भूयो न वक्रो भववीति बुद्ध्या ।
अन्योऽपि चान्तः कुटिलत्वदोष-
मपाचिकीर्षुः सुदृशो गलोऽभूत् ॥ ६८ ॥

अभिख्ययानुत्तमया जगत्सु
त्रिषु प्रसिद्धेन सुदृग्गलेन ।
कम्बुं दराभिख्यमथा(८)प्रसिद्धं
कथं कवीन्द्राः कथयन्ति तुल्यम् ॥ ६९ ॥

द्विजेन केनापि हृतिः पुरासी-
द्द्वित्रीति भेजे सुधयाधरोऽस्याः ।
नाबोधि किं नाथ तया भवित्री
हृतिर्द्विजैरत्र च तावकीनैः ॥ ७० ॥

जातानुषङ्गः शुचिभिर्द्विजौघै-
र्जपानुषङ्गस्फुरितोऽधरोऽस्याः ।
मन्ये मुकुन्दातनुमन्त्रसिद्ध्या
भजेत योगं भवदाननेन ॥ ७१ ॥

नवांशुकालीमरुणां मुखे या
प्रपञ्चयत्यञ्जदृशो रसज्ञा ।
अस्तोकबन्धूकजपाभिरामा
सा शारदोल्लासवती न किं वा ॥ ७२ ॥

मन्ये सुकेशीमणिनासिकायाः
कोपोऽधिकश्चम्पककुड्मलेषु ।
इमं समाभिख्यमियं यतोऽधः
करोति हेमाभरणापदेशम् ॥ ७३ ॥

राजोपजीवीनि नवोत्पलानि
राजीवमम्बुरुहदिनावलम्बम् ।
विलासवत्या नयनं व्यजेष्ट
नयोपपन्ना जयिनो ननु स्युः ॥ ७४ ॥

श्वासानिलामोदवशादुपेतै-
र्नासासुधागण्डफलीविभीतैः ।
छलेन चिल्ल्योरलिभिर्निलीनैः
शङ्केऽलिकान्तं निटिलान्तमस्याः ॥ ७५ ॥

अधः कृतं नासिकयाबलायाः
कान्तत्वमभ्येत्य पुनः कथंचित् ।

त्वदीयवृत्ताद्दृढभक्तिमुद्रा-
तरङ्गितोद्दामदयापयोधेः ।
आज्ञावशादागममम्बिकायाः
प्रज्ञानिधेऽहं भवतः सकाशम् ॥ ८१ ॥

निवेद्यते चेन्निखिलापि तन्व्या
दूरे दशा कामवशंवदायाः ।
श्रुतं समानामपि नालमेव
सामान्यतोऽप्यवधारयैनाम् ॥ ८२ ॥

चित्रे भवन्तं लिखितं चिराय
निध्याय निध्याय नितम्बवत्याः ।
प्राप्ता दृशाकार इवानिमेष-
भावेऽपि मीनप्रतिमानमुद्रा ॥ ८३ ॥

सखीजनानां सरसोक्तिगुम्फे-
ष्वनुत्तराया हरिणेक्षणायाः ।
त्वद्वर्णनाकर्णनसौमनस्य-
मकुण्ठतायां श्रवसः प्रमाणम् ॥ ८४ ॥

मधुद्विषे मामकवाचिकानि
निवेदयेदेष न वेत्यवैतुम् ।

संभाव्य संकल्पसमागतत्व-
दाचुम्बनाडम्बरमम्बुजाक्षी ।
आकुञ्चयत्यञ्चलमीषदक्ष्णो-
र्निशासु निद्राधिगमेन नैषा ॥ ९० ॥

तन्तन्यमाने तनुमध्यमायाः
संकल्पतस्तावकसंप्रयोगे ।
कृतस्य किं कल्पनयेति मन्ये
स्वप्नो यतात्प्रोति कदापि नैनाम् ॥ ९१ ॥

प्रपञ्चितोच्चावचमूर्छनाया
विपञ्चिकायां विमनायते सा ।
पदप्रदुत्ताललयेऽपि लास्ये
न किंचिदप्यञ्चति नर्म तन्वी ॥ ९२ ॥

निमीलयत्यक्षि निशाधिनाथं
तमीचरं वीक्ष्य तलोदरी सा ।
समीरणात्त्रस्यति जीवितेश-
समीपतो हन्त समागतात्किम् ॥ ९३ ॥

उद्गूढनिःश्वासभरोपवन्यां
मृदूदयन्मारुतकंदलायाम् ।

हरिः समेतीत्यधिगत्य कीरं
विधुर्विभातीति विलोक्य चन्द्रम् ।
पद्मानुरागी स्फुरतीति भानुं
प्रेक्ष्य भ्रमं गोपयते निजं सा ॥ ९९ ॥

लावण्यसिन्धुर्ललना सुधांशु
मालोक्य पर्याकुलजीवनास्तु ।
नेत्रोत्पलं मोहतमोभरेण
निमीलितं हन्त कथं नु धत्ते ॥ १०० ॥

चित्ते विधत्ते सुदती यदा त्वां
निस्पन्दतामेति तदा नितान्तम् ।
कथं क्षमा स्पन्दितुमाशयस्थे
विश्वंभराभारभृति त्वयीयम् ॥ १०१ ॥

ध्यानावसानावसरागतत्व-
दालिङ्गनानन्दनमोदभाजः ।
परिस्फुरन्तः पुलकप्ररोहाः
प्राणेषु तस्याः प्रतिभूभवन्ति ॥ १०२ ॥

स्वेदाम्बुसिक्ते हृदये सुदत्याः
त्वदीशिता संप्रति रागबीजम् ।

अङ्कूरयन्ति पुलकापदेशा-
त्स्मरं पुनः सिञ्चति बाष्पपूरैः ॥ १०३ ॥

असाद्यपूर्वः स्मरधातुवादी
संताप्य संताप्य रसानुवेधात् ।
सुवर्णमस्याः सुदृशः शरीरं
दुर्वर्णमेव द्रुतमातनोति ॥ १०४ ॥

मधुद्रवैर्मन्मथसायकानां
स्वेदाम्बुभिः सिक्तशरीरयष्टिः ।
तत्पक्षवातैस्तरला तदीय-
पुङ्खैः स्फुरद्भिः पुलकैर्वृता सा ॥ १०५ ॥

मन्ये नभो मन्दसमीरमस्याः
श्वासे सुधादीधितिधाम हासे ।
भुवं नितम्बे च पुरा निधाय
नेत्रे विधात्रा निर्मायितेऽम्भः ॥ १०६ ॥

असह्यमध्याशयवेदिकायाः
धूमायमानं स्मरधूमकेतुम् ।
बाष्पाम्बुपूरैर्बहुधा गलद्भिः
निर्वापयन्तीव पयोरुहाक्षी ॥ १०७ ॥

किमत्र चित्रं वद कीरवाणी
 विलासिनी साजनि विस्वरेति ।
इदं तु चित्रं यदुनाथ घत्ते
 सूक्तीस्तथा सा श्रुतिसंगतापि ॥ १०८ ॥

कृतं मृणालैः किसलैरलं मे
 प्रयोजनं किं प्रनवास्तरेण ।
शीताय नालं हिमवालुकेति
 सेयं निरुन्द्धे शिशिरोपचारान् ॥ १०९ ॥

अहार्यभारादिव हन्त हारा-
 नूनाधुना हंसगजेन्द्रयाना ।
महीभृतं त्वां हृदये बिभर्ति
 मनोभवाज्ञामहिमा स एषः ॥ ११० ॥

आनाति यावज्जनतेति शौरे
 परिस्फुरत्पाण्डिमगोपनाय ।
अजानती मानसजाग्निदीप्तिं
 करोति मुग्धा घनसारमङ्गे ॥ १११ ॥

महीयते माधवसंगतेयं
 वही भवत्या पुष्पिता वराङ्गि ।

आलोकयेत्यालिमुदीरयन्ती
मालोकते माधव कुञ्चितभ्रूः ॥ ११२ ॥

हस्तस्थकाण्डे हरिणेक्षणा सा
फूत्कृत्य रोदित्यथ साश्रुपूरा ।
गतागतैर्निःश्वसितानि दूरं
मुञ्चत्यथो हन्त भवत्यनीहा ॥ ११३ ॥

आलीजनादेशमपारयन्ती
कर्तुं कटाक्षैरुचितक्रियासु ।
त्वदन्तिकं प्रेषयितुं प्रियोक्ती-
र्ब्रवीति भूयः परिचारिकासु ॥ ११४ ॥

स्वयं किमप्यस्फुटमालपन्ती
पृष्टा पुनर्न प्रतिवक्ति किंचित् ।
समाधिलीनेव ततः क्षणेन
सा सामिसंमीलितलोचनास्ते ॥ ११५ ॥

कर्णातिथित्वं गमिता पुरा य-
त्कथा यथानन्दममन्दमाधात् ।
कीर्तिं तदीयां सखि कीर्तय त्वं
गीर्भिः किमन्याभिरिति ब्रवीति ॥ ११६ ॥

आहूय लीलाशुकमादरेण
बाहूपरि न्यस्य बहूपलाल्य ।
त्वदन्तिकं प्रेषयितुं कृतेच्छा
न वाचिकं वक्ति न जोषमास्ते ॥ ११७ ॥

दृष्ट्वा तमालं तरुणी स्पृशन्ती
कर्णान्तलोलालनलकान्करेण ।
क्षणं प्रवालं श्रवणावतंसं
करोति चैतद्व्यपदेऽभिषिक्तम् ॥ ११८ ॥

पञ्चायुधाप्तो विधुरञ्जसीति
चन्द्रं समुद्वीक्ष्य सखीभिरुक्ते ।
सा किंचिदुत्फुल्लविलोचनाब्जा
स्रस्तोत्तरीयाभरणोज्जिहीते ॥ ११९ ॥

संचारिकाप्रेषणसाहसिक्य
कन्याजनानां न कदापि भव्यम् ।
कामोऽपि मोहं कुरुते घनेति
कर्तव्यमेषा न किमप्यवैति ॥ १२० ॥

तामन्तवेश्मस्तरुणीमवस्थां
श्रुत्वा तवात्मन्यनुरागशैलीम् ।

अन्यावनीनायककन्यकाभ्यो
धन्याहमेवेत्यभिमन्यते सा ॥ १२१ ॥

शृणोमि चेत्तस्य गुणाननङ्ग-
गुणध्वनिर्मां बधिरीकरोति ।
पश्यामि चित्रे यदि पातकी मे
बाष्पो विरोधीति सदाकुला सा ॥ १२२ ॥

दूती मनोवेगवती दुरापा
दूरेतरां द्वारवती पुरी च ।
क्षणोऽपि हा कल्पशतायते मे
करोमि किं वेति करोति चिन्ताम् ॥ १२३ ॥

निमीलयत्यक्षि निशासु नैव
निमेषमेवाथ निमीलयेचेत् ।
धनुर्धरं वीक्ष्य पुरः सुमास्त्रं
धावत्यविश्रान्तमितस्ततश्च ॥ १२४ ॥

कदा तदालिङ्गनजातमोद-
सुधासुधावारिधिमग्नचेताः ।
भुजान्तरे तस्य चिरं शयाना
हृष्टा भविष्येऽहमितीहते सा ॥ १२५ ॥

राधा न चाहं रतिवल्लभा ते
पथि स्खलन्किं पतितोऽसि यद्वा ।
यावद्वृथा कुप्यति साधु याहि
याहीत्युदग्न्वी निपतीयमर्थे ॥ १२६ ॥

तमालयमे तरुणं समीक्ष्य
तन्वी भवद्भावनया सदैव ।
स्विन्नाखिलाङ्गी सवितुः करेण
स्विन्नाहमस्मीति सलज्जमाह ॥ १२७ ॥

माकन्द मन्दोऽसि यतो मुकुन्दं
ब्रूषे न मे हन्त यदि ब्रवीषि ।
पुष्पाणि पुष्पायुधसाधनानि
तवैव भूपाः स्युरिति ब्रवीति ॥ १२८ ॥

विनिन्द्यते हन्त वृथा रसालः
समीपमीशोऽस्य समागतश्चेत् ।
निरन्तरं तन्मुरलीनिनादै-
रङ्कुरितः स्यादयमित्यवैति ॥ १२९ ॥

वनप्रिये व्याहरसि प्रियं चे-
त्तवैव लाभो भविता तदानीम् ।

ताम्यन्ति तापेन न मे यतोऽमी
　　चूतप्रवाला इति वक्ति सुभ्रूः ॥ १३० ॥

प्रियो ममायं नियतं पिकेन
　　व्यालोकि नानेन विलोकितश्चेत् ।
तदीयवंशीरवजातलज्ज-
　　स्तारं न कूजेदिति मन्यते सा ॥ १३१ ॥

मयीपि चेद्बर्हिण वल्लभं मे
　　वदा समादाय तवैव पिच्छम् ।
कर्णावतंसं कलयेऽस्य नान्य-
　　थाशानवासादिति याचते सा ॥ १३२ ॥

शुकेव कोकिन्मुहुरस्य याचे
　　नालोकि नाथो भवता न नूनम् ।
आलोकितश्चेद्यधुना नटेत्स्व-
　　मित्यालपन्त्यन्यत एति बाला ॥ १३३ ॥

चन्द्रांशुलीलावनचन्दनादि-
　　वार्तासु वार्ता वरवर्णिनी या ।
आराममूभावनुलिप्तगात्री
　　चन्द्रातपं संप्रति सेवते सा ॥ १३४ ॥

आशङ्क्य भृङ्गारवमङ्कजात-
मौर्वीलताटङ्कृतिमेव गुर्वीम् ।
ध्यानागतत्वत्परिरम्भणाय
दीना मुधा वारयति स्म बाहू ॥ ११५ ॥

पश्याम्यकिश्यामलमालि कंचि
स्वप्नो नु नाप्नोमि कदापि निद्राम् ।
भ्रमो नु नोदेति कदापि बाधा
मायेव मारस्य वदित्यवैति ॥ ११६ ॥

शौरे पल्लविताभिरुक्तिभिरलं चेदीशितुः श्वः पिता
रुक्मी दातुमिमां व्यवस्यतितमां रोषानुपज्ञास्त्वयि ।
मार्गं यद्वहे मदन्वयगुरो भक्तानुरक्त्या कृपा-
स्ताद्दग्भाग्यभरांशभाजमधुना सन्धास्तदाकस्य माम् ॥

अथाण्डजविमुग्धजस्तमधिरुह्य कीरं रया-
दहिण्डत स कुण्डिनं पुरमखण्डभूमण्डनम् ।
अनुक्षणमदःशुकादमुमुदन्तमाकर्णय-
न्त्यविन्दत विदर्भजाप्यरममन्दमानन्दथुम् ॥

इति श्रीराजचूडामणिदीक्षितस्य कृतिषु
रुक्मिणीकल्याणनाम्नि काव्ये
तृतीयः सर्गः ॥

# चतुर्थः सर्गः ।

---

अपरेद्युरथाभिवन्द्य गौरी-
पदयोर्भीमसुतां निवर्तमानाम् ।
प्रददर्श हरिर्निजागमाशा-
भरतो दिक्षु विदिक्षु दत्तदृष्टिम् ॥ १ ॥

सुदतीसुषमासुधाझरीभिः
सुचिरं संपरिपूर्य दृक्तडागम् ।
परिवाहितहर्षबाष्पपूरो
मनसैवं निजगाद मानवेन्द्रः ॥ २ ॥

पदपद्मयुगेन पक्ष्मलाक्ष्याः
स्खलितस्तूलभरः परं म्रदिम्ना ।
मृदुलाममुना त्वयापि लब्धुं
ध्रुवमारज्यति यावकद्रवेण ॥ ३ ॥

मृदुतोपगतोपमेयभाव-
प्रभवागःप्रशमाय तूलपुञ्जः ।

सपदीकुरुते किमुत्पलाक्ष्याः
सरसालक्तकसंपदं पदस्य ॥ ४ ॥

पदयोरनयोः पयोरुहाक्ष्याः
किसलं हन्त कियद्दिनैकहृद्यम् ।
कथयन्ति समं कवीश्वरा य-
त्फलमेतत्तु पचेलिमं त्रदिम्नः ॥ ५ ॥

वदनेन्दुपराजितो वराङ्ग्याः
स्वयमङ्गुष्ठनखाकृतिः सुधांशुः ।
परिवीजयति प्रभापदेशा-
त्पदयोः पद्मजितोर्दुकूलपट्टीम् ॥ ६ ॥

चकितैर्गतिचातुरीभिरस्या
हरिणाक्ष्याः किमु राजहंसयूथैः ।
जलदुर्गमभाजि सिन्धुरेन्द्रै-
र्गिरिदुर्गं वनदुर्गमप्यगाहि ॥ ७ ॥

सुदतीगतिसौकुमार्यचौर्या-
द्वनदुर्गाश्रयिणोऽपि वारणेन्द्राः ।
बत शृङ्खलिता बलाद्गृहीत्वा
महिपैर्युक्तमिदं मदान्धतायाः ॥ ८ ॥

गजराजवधूगभीरगत्या
　　गतिचातुर्यकृतस्पृहा मरालाः ।
पदपद्मसहोदरैरमुष्याः
　　प्रथयन्ति प्रणयं ध्रुवं पयोजैः ॥ ९ ॥

प्रपदद्वितयद्युतिप्रकर्षं
　　प्रसमीक्ष्य प्रमदामणेरमुष्याः ।
कमठैरजनि त्रपावशात्किं
　　करणेष्वेव निजेषु संकुचद्भिः ॥ १० ॥

अदसीयमलासहिं तुला किं
　　पदपद्मं प्रसमीक्ष्य किं नु साक्षात् ।
समयापि तिरोहिताकृतिभ्यां
　　सततं गुल्फसुधामणीतुलाभ्याम् ॥ ११ ॥

स्खलवलघुसुषतां नयन्त्या
　　कलयन्त्या गुरुमध्यमस्तथैव ।
तुलया तुलयन्ति मामितीव
　　त्रपया गुल्फयुगं निगूढमस्याः ॥ १२ ॥

प्रपदं छलिचातुरीधुरीणं
　　नखपङ्क्तिर्नवशुक्तिभङ्गभङ्गिः ।

अपि गुल्फयुगी कुलीरकोटि-
श्चरणोऽस्या धृतरागमागरश्रीः ॥ १३ ॥

मणिनूपुरमञ्जुलालवाले
सुषुमाम्भोभरिते पदे, सुकेश्याः ।
रतिमन्मथरोपितौ विलासा-
ननु जङ्घे नवगर्भशालिशाली ॥ १४ ॥

इषुधिर्ध्रुवमेतदीयजङ्घा-
युगलेन प्रतियुध्य दुर्जयेन ।
शरसंततिदन्तुरान्तरङ्गः
समभूदुत्कटयोधपृष्ठलम्बी ॥ १५ ॥

अतिकर्कशया मयानवाप्यां
वहतीयं वनितोरुकाण्डशोभाम् ।
इति नूनमुदञ्चिताभ्यसूया
करिशुण्डा कदलीवनं लुनीते ॥ १६ ॥

कुलभूमिधरस्य कूटलक्ष्मीं
कुचकुम्भावुपरि स्थितौ दधाते ।
इति युक्तमधः स्थितेन दध्रे
सुदृशः श्रोणिभरेण वप्रशोभा ॥ १७ ॥

विजिता पतिरद्रिमेखलानां
   विपुलाक्षीमणिमेखलापदेन ।
अभिधा दधती किलाद्रमीया-
   मखिलैरप्यभिधीयते नितम्बः ॥ १८ ॥

कलये सुदृशो नितम्बबिम्बं
   कलिता काममहोत्सवाय वेदिम् ।
स्फुरति स्फुटरोमराजिधूमं
   पुरतो यत्किल नाभिहोमकुण्डम् ॥ १९ ॥

अवमत्य वलित्रयत्रिरेखा-
   मचिरान्नाभिबिलात्समुज्जिहानः ।
नवरोमलताफणी नवाङ्ग्याः
   स्तिमितो नु स्तनमण्डलावलोकात् ॥ २० ॥

कुचकुट्मलकूटसंपुटे द्वे
   कुतुकान्निक्षिपता कुशेशयाक्ष्याम् ।
जगृहे नवरोमराजियष्टि-
   र्जनसंमोहकरेण यौवनेन ॥ २१ ॥

प्रमदामणिनाभिगाधतल्प-
   प्रतिलम्भाय नवेन यौवनेन ।

विधृता वलवैरिनीलयष्टी
रुचिरा राजति रोमराजिरूपा ॥ २२ ॥

स्तनयोरनयोः किमन्तराले
तनुरप्यस्ति मृगीदृशोऽवकाशः ।
इति बोद्धुमिवोपनीयमाना
मणिसूची मदनस्य रोमराजिः ॥ २३ ॥

नवयौवनशिल्पिना नवाङ्ग्याः
कुचसौधं कुसुमायुधाधिवासम् ।
सुषुमाम्बु निनीषुणाधिनाभि-
ग्रहि रोमावलियन्त्रकं प्रणीतम् ॥ २४ ॥

नवनाभिमुरस्थिता नवाङ्ग्या
सुरभी रोमलता मयोमुरारेः ।
मिषति त्रिवलीमिषाद्मुष्या-
मनिशत्याघ्रुतमङ्गुलित्रयं किम् ॥ २५ ॥

अनुकाञ्चि समञ्चनीयमस्याः
समया नाभिबिलं सरोरुहाक्ष्याः ।
त्रिवलीवलयाङ्कितः समिन्द्रे
रुचिरो रोमवलैकचूतनायः ॥ २६ ॥

कुसुमायुधभूपदुर्गसीम्नोः
कुटिलाक्ष्याः कुचभूभृतोरमुष्याः ।
असितांशुकृताधिरोहणीयं
नवरोमावलिनाटिकावहास्ते ॥ २७ ॥

अपनेतुमिवायशः स्वकीयं
घनसारप्रतिकूलतोपजातम् ।
लिकुचं कुचतां गतं च चित्रं
कनकाङ्ग्या न जहाति पूर्ववर्णम् ॥ २८ ॥

शशिशेखरशेखरोपयुक्त-
च्छदजातार्पणसंभृतैस्तपोभिः ।
दधते नियतं फलानि बिल्वा
दयितोरोरुहवृत्तसौहृदानि ॥ २९ ॥

कुचकुड्मलतो भिया कृशाङ्ग्याः
कुहचिच्चक्रयुगं जले निमग्नम् ।
इह संकुचदेव सायमब्जं
स्फुटमाक्रोशति वद्धमेण नूनम् ॥ ३० ॥

नवयौवननामसूत्रधारो
नलिनाक्ष्यामिह नाटयन्विलासान् ।

अधित स्तनतालयुग्ममारा-
दजहल्लम्बनरोमराजिसूत्रम् ॥ ३१ ॥

नतनाभिमणेः स्फुटे मुखेन्दौ
न वियुक्तौ कुचकोकदम्पती यत् ।
अनिशं च पुरोऽधराञ्चलेऽस्मि-
न्नरुणांशुस्फुरणस्य वैभवं तत् ॥ ३२ ॥

कुचकुड्मलयुग्मकांदिशीकौ
कुटिलाक्ष्या जलजातकोशचक्रौ ।
मिलितावुचितं मृणालवल्ली-
लहरीभ्यां भुजवल्लरीजिताभ्याम् ॥ ३३ ॥

मणिहारमरीचिकापरीतौ
स्तनकुम्भौ तरुणीमणेरमुष्याः ।
स्मरमङ्गलशातकुम्भकुम्भौ
स्मरणीयौ कुरुतो निबद्धतन्तू ॥ ३४ ॥

सुदृशः सुषमाम्बु नाभिकूपा-
च्छुभरोमावलिशुण्डयोपगृह्य ।
कुरुते मणिहारशीकरालिं
कुचकुम्भोपरि किं वयोगजेन्द्रः ॥ ३५ ॥

नलिकं नवरोमराजिदम्भा-
ःकलयन्मानसगं ममाभिदन्तुम् ।
गुलिका व्यतनिष्ट हारवल्ली-
गुरुमुक्ताभरतः स्मरः कृशाङ्ग्याः ॥ ३६ ॥

लसमानभुजद्वयीलताभ्यां
त्रिभवल्ली यदजीयत प्रियायाः ।
तदियं त्रपया जले निमग्ना
तनुमाविष्कुरुतेतरां वलक्षाम् ॥ ३७ ॥

अदसीयकराङ्गुलीक्षुरवण्डाः
प्रतिपर्वप्रथमानभूरिशोभाः ।
नरकंदलपङ्क्तिनामधेयां
नवमुक्ताफलराजिमुद्गिरन्ति ॥ ३८ ॥

ललितां ललनाललाटरेखां
कलयन्निन्दुकलान्तरैः कियद्भिः ।
करयोः किमु कंदलं नखानां
विदधे वारिजविष्टरोऽवशिष्टैः ॥ ३९ ॥

परपुष्टवधूमुकावरोधाः
प्रमदामौलिमणेर्वचोविधेयाः ।

किमदोधरबिम्बकान्तिचोरं
किसलं बिम्बफलं च खण्डयन्ति ॥ ४० ॥

अधरो बहुधा निपीयमानो-
ऽप्यधिकोद्भिन्नरसो यदस्य हेतुः ।
निटिलेन्दुकलानिरन्तरोद्य-
न्निबिडासारसुधारसाभिषेकः ॥ ४१ ॥

विधिवामदृशो विहारभाजः
पद्मलाक्षारसपाटला रसज्ञा ।
द्वयत्यमला च दन्तपङ्क्तिः
स्फुटमस्याः स्फटिकाक्षदामलक्ष्मीम् ॥ ४२ ॥

सुदृशो रसनानिवासिवाणी-
शुकपोषप्रभुवि न्यधायि धात्रा ।
किमु दाडिमबीजराजिरस्या
दशनाल्या दशनच्छदेन बिम्बम् ॥ ४३ ॥

रमणीहृदयानुरागवल्ल्या
रसनां शंसति पल्लवानुबन्धम् ।
अमला पुनरावलिर्द्विजानां
कुरुते कोमलकुट्मलालिशङ्काम् ॥ ४४ ॥

मयि काञ्चन-विक्रियां निनीषु-
    र्मदनः किं नु मृदुस्मितांशुदुग्धे ।
कुरुते गुलिकां रसेन बद्धां
    गुरुनासामणिकैतवादमुष्याः ॥ ४५ ॥

अवदाततमानि वस्तुजाता-
    न्यखिलान्याददतात्मभूरमुष्याः ।
विरचय्य दृशस्ततोऽवशिष्टै-
    र्विदधे मौक्तिकमेव नासिकायाः ॥ ४६ ॥

स्मितकान्तिसुधारसे सुदत्याः
    किमु नासामणिकैतवेन मूढम् ।
स्वयशःकलमाङ्कुरोदयाय
    स्वयमेवैष निमज्जयत्यनङ्गः ॥ ४७ ॥

अबलामणिनासिकाभिरूप्यं
    प्रसमीक्ष्यापि क्षुधा तिलप्रसूनम् ।
शतधा यददीर्यत क्षणात्सो
    वहते तत्किल वज्रपुष्पनाम ॥ ४८ ॥

मृदुगन्धवहादसीयनासा-
    कुहनाघ्राणकुड्मलेऽक्षिलक्ष्ये ।

कथयन्ति सुदुर्लभं कथं वा
सुरभित्वं सुधियः सुवर्णपुष्पे ॥ ४९ ॥

अतनोद्विधिरेतदक्षि नीलो-
त्पलरक्तोत्पलपुण्डरीकमारैः ।
प्रथते परथा कथं विनीलं
कचन क्वाप्यरुणं कचिसितं च ॥ ५० ॥

अवतंसितमुत्पलं किमारा-
दवलोक्याश्रितमुत्पलोपमाक्ष्याः ।
अधिकर्णतया दृगञ्चलाभ्या-
मजनि त्रासवशेन चञ्चलाभ्याम् ॥ ५१ ॥

प्रतिघारुणमीषदञ्चलेऽस्याः
प्रमदाया नयनं गतेर्निरोधात् ।
अवतंसासितेतराब्जदम्भा-
दधिरुह्य श्रवणं प्रतिष्ठते किम् ॥ ५२ ॥

नयनेन नवोत्पलं नताङ्ग्या-
स्तुलितं चित्तभुवा ध्रुवं तुलायाम् ।
अवतंसनिभेन किंचिदुच्चै-
रजनिष्ट स्फुटमावहल्लघुत्वम् ॥ ५३ ॥

ललनातिलकस्य चारुचिल्ली-
लतया विभ्रमसंपदेकधाम्ना ।
सदृशी कथमस्तु शम्बरारे-
रविकर्णोपनता शरासवल्ली ॥ ५४ ॥

उपजातमलिम्लुचोपरोधा-
दयशश्चम्पकमात्मनोऽपनेतुम् ।
ललनामणिनासिकायमानं
लसति भ्रूलतिकालिमालिकाभ्याम् ॥ ५५ ॥

अयशो भृशमस्य चम्पकस्य
प्रथितं माधुकरप्रचाररोधात् ।
अचलामणिनासिकात्मतायां
मपि चिल्लीरूपदान्निरीक्ष्यतेऽस्मे ॥ ५६ ॥

नियतं निटिलश्रियं चतुर्थी-
शशिलेखा शतपत्रलोचनायाः ।
अपहृत्य मतामभूदनीक्ष्या
न तु मद्भिः प्रसमीक्ष्यते सदोषा ॥ ५७ ॥

चिकुरप्रकरश्रियोऽनुकारा-
च्चमरी मुग्धचमूरुलोचनायाः ।

निजबालभरेऽपराङ्गकेभ्यो
नियतं प्रीतिमनुत्तमां विधत्ते ॥ ५८ ॥

कबरीभरकान्तिनिर्जितश्री-
भ्रमरीबालधिरेष चञ्चलाढ्याः ।
परिकर्मविधाविधानदम्भा-
त्प्रचुरामस्य चरीकरीति सेवाम् ॥ ५९ ॥

अवलम्ब्य पदाम्बुजातमादा-
वथ रागो हृदयं ततोऽधरोष्ठम् ।
अधिरोहति मौलिमप्यमुष्याः
किमु सिन्दूरपरागकैतवेन ॥ ६० ॥

कालिन्दीजलवेणिकापरिणतिः कान्तामणेर्वेणिका
सीमन्तोऽपि सरस्वतीलहरिका सिन्दूररागारुणः ।
मुक्ताचारुललन्तिकारुचिरियं मूर्तेव मन्दाकिनी
मज्जन्तीह मदीयलोचनयुगी मन्येऽनिमेषायते ॥

कलन्तीं कान्तायाः कचरुचिमसाधारणतया
कवीनां लोको यत्कथयति तदेतन्न हि मृषा ।
सपक्षात्सर्वस्मादपि मधुकराणां समुदया-
द्विपक्षाद्व्यावृत्तिं व्रजति शिखिपिञ्छादपि यतः ॥

सुदत्या लावण्यस्रुतिरनघकेशोच्चयघना-
द्गलन्तीयं मुक्तामणमयललन्तीकपटतः ।
निलीना भ्रूवल्लीनिकटभुवि नासानिभमणि-
प्रणालीतो मुक्ताफलवपुरभिष्यन्दत इव ॥ ६३ ॥

कुचाभोगे पत्रावलिभृति कुलक्ष्माधरधिया
निजं शल्यं वज्री नियतममुचद्भीरुदृशः ।
तदेतत्काठिन्याद्दहह शकलीभूय शतधा
स्फुरत्याकल्पान्ते स्फुटममलवज्रोपलनिभात् ॥

कुलाद्रिद्वन्द्वं कुवलयदृशो नाभिकुहरा-
त्प्रसर्पन्ती रोमावलिनिभपिपीलावलिरियम् ।
मदीयान्तर्देशे मदनशरवृष्टिं निरवधिं
विना वाचो वृत्तिं विशदतरमेव प्रथयति ॥६५॥

वयोमायी रोमावलिकपटपिच्छं प्रकटय-
न्विजृम्भन्तौ कुर्वन्भियति कुलभृत्परिवृढौ ।
स्फुटं किं चातन्वन्मतलमुपकण्ठस्थितिमती-
मनूनं शीतांशोरपि कलयते मण्डलमहो ॥६६॥

निर्वर्णयन्निति नितम्बवतीं मुकुन्दो
मन्दाक्षमोदभरमेदुरितान्तरङ्ग. ।
अङ्कं नयन्नयमिमामथ कुञ्चिताङ्ग-
माहृह्य कौरवरमात्मपुरीं प्रतस्थे ॥ ६७ ॥

इति श्रीदन्तिद्योतिदिवाप्रदीपाङ्कसत्यमङ्गलरत्नखेटश्रीनिवासदीक्षित-
तनयस्य कामाक्षीगर्भसम्भवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरण-
सहजताल्लब्धविद्यावैशद्यस्य श्रीराजचूडामणिदीक्षि-
तस्य कृतिषु रुक्मिणीकल्याणनाम्नि काव्ये
चतुर्थः सर्गः ॥

## पञ्चमः सर्गः ॥

पश्चादेमे पश्चिमं पद्मनाभः
पश्यन्नक्ष्णोर्भागधेयं पयोधिम् ।
पश्चाच्चक्षुश्चञ्चलाक्षीमुखेन्दौ
मोचाहं तामोचनीं वाचमूचे ॥ १ ॥

प्रायः पुण्यप्राणनार्हां सुराणां
पर्यङ्कत्वं प्राप्नुवन्पद्मनाभेः ।
शंभो सोऽयं शाश्वतोत्तंसदायी
वाचां दूरे वर्तते वारिराशि ॥ २ ॥

मन्ये पाथोमानुषीणाममूषां
लावण्यश्रीलालितालोकनेन ।
जाताशङ्का जातु विश्रायवश्यो
लक्ष्मीरासिल्लक्ष्यते नद्यन्ती ॥ ३ ॥

पश्यामुष्मिन्प्राकृते कूर्मराजे
क्रीडाभेदैः क्रीमतिष्ठे दुर्लभि. ।

ईर्ष्यारोषादीषदारज्यमाना-
नीक्षाभेदानिन्दिरा तन्वनीति ॥ ४ ॥

स्वैरं मीनक्षौणपक्षेषुविद्या
पारीणत्वं पार्श्वतो वीक्षमाणः ।
भूयो धर्तुं भूमिकां मीनयूनो
जातोत्कण्ठो जायते शार्ङ्गधन्वा ॥ ५ ॥

शङ्के कायच्छायमायानिशाया-
मुग्धद्रूनोद्द्योतशेषप्रदीपः ।
शश्वद्गृह्-सम्मनोमीनयूनो
दाशार्होऽयं दृश्यते वारिराशौ ॥ ६ ॥

विष्णोराराद्वीचिलोलत्पताका-
चेलोपान्ते चित्रितो वैनतेयः ।
लक्ष्मीवीक्षालालितीचोर्यचुञ्चू-
न्हन्तुं मीनान्हन्त संनह्यतीव ॥ ७ ॥

गाढोत्कण्ठं कण्ठकाण्डे फणीन्दो-
र्वैकुण्ठीया वैजयन्तीं निबध्य ।
गायन्तः श्रीकामुकं वारिसत्त्वाः
खेलालीलादोहदानारभन्ते ॥ ८ ॥

वारं वारं वारिनारीकुमार्यः
　　कालेयानां कायतः शेषमौलौ ।
धूमोद्गारैर्धूसरा वाडवाग्ने
　　रत्नश्रेणी रञ्जयन्त्यञ्जसा किम् ॥ ९ ॥

पाथोनाभीपद्मघूर्णौ मधूल्या
　　सेकं सेकं शेषशय्याशयस्य ।
पाथोनार्यः पश्य हारिद्रचर्चा-
　　सौभाग्यानां मौलभौ संलभन्ते ॥ १० ॥

पद्माजानेः पश्य नाभीसरोज-
　　क्ष्योतन्माध्वीस्रोतसा स्वादु पाथः ।
पायं पायं प्रायशो वारिवाहाः
　　स्वच्छा यान्ति स्वादुवर्षित्वकीर्त्तिम् ॥ ११ ॥

तल्पोपान्ते तादृशे सिन्धुकन्या
　　नाथस्याक्षेपाभिनालीकघूर्णौ ।
वाणीजानेर्वेरसत्वा वारिसर्वे-
　　श्रेणीबालाः शीलयन्त्यक्षराणि ॥ १२ ॥

नित्यं नाभीनीरजातान्मुरारे-
　　र्माध्वीपूरे मांसले स्यन्दमाने ।

सेतुर्धूलीसैकतैर्वारिनारी
बालैरेतैर्बध्यते बद्धलीलैः ॥ १३ ॥

धूलीपालीदोहदं निक्षिपन्तः
सेकं सेकं स्यन्दमानैर्मरन्दैः ।
नाभीपद्मं नायकस्येन्दिरायाः
पाथोमर्त्याः पङ्कजत्वं नयन्ति ॥ १४ ॥

बद्ध्वाबालं बन्धुरं धूलिजालैः
सेकं सेकं शीधुधारानुवारम् ।
पाथोमर्त्याः प्रापयन्त्यम्बुजत्वं
प्रायो नाभीपद्ममम्भोजनाभेः ॥ १५ ॥

पुञ्जीभूते भूरिशः शौरिनाभी-
पद्मोद्यान्ते पांसुजालऽधिशेषम् ।
कुर्वन्त्येताः कौस्तुभं गूहमानाः
पाथोनारीबालिका धूलिकेलिम् ॥ १६ ॥

कीर्तिस्फूर्तिं किन्नरीगीयमानां
श्रावं श्रावं शार्ङ्गिणः शान्तरोदाः ।
शेषोपान्ते शेरते वारिनारी
बाला नाभीपद्मलोलायताक्ष्यः ॥ १७ ॥

गन्धर्वाणां गायतामिन्दिरेशं
वीणाख्याबुं व्याजतोऽमी गृहीत्वा ।
अन्ये पाथोमानवीनां कुमाराः
पारावारे पश्य दूरं प्लवन्ते ॥ १८ ॥

शेषस्यामी शीर्षमारुह्य सिन्धो-
र्मध्ये पाथोमर्त्यडिम्भाः सदम्भाः ।
वारं वारं वासुकिक्ष्वेलपङ्का
न्नादातुं द्रागात्तगन्धाः पतन्ति ॥ १९ ॥

पश्येदानीं पद्मनाभीयनाभी-
नालीकोथैर्नालदण्डैकरूपे ।
नह्यन्त्येते नव्यनिर्मोकशाटीं
पाथोमर्त्याः पन्नगाधीशतर्याम् ॥ २० ॥

शय्याभूतः शार्ङ्गपाणेः फणीन्द्र-
श्चण्डैर्वातैश्चालनं शङ्कमानः ।
बद्ध्वा दीर्घैर्ब्रह्मसूत्रैर्विधातुः
सिन्धौ क्षेप्तुं सीरमद्धा बिभर्ति ॥ २१ ॥

वीचीवातैर्विष्णुनाभीसरोजा-
द्दूरोद्भूता धूलिकापालिकेयम् ।

अम्भोवाहेष्वापतन्ती समन्ता-
द्विद्युल्लक्ष्मीविभ्रमं तन्वनीति ॥ २२ ॥

नाथस्येयं नाभिपद्मालिमाला
वारां राशौ वारिवाहच्छलेन ।
लब्ध्वा पाथोहस्तिदानाम्बुधारा-
सारोद्भ्रान्त्या संभ्रमाद्बम्भ्रमीति ॥ २३ ॥

फुल्लाम्भीपुण्डरीकोदराभ्र-
स्पांशुश्रेणीपाटलाभ्रापदेशात् ।
संगृह्णीते सागरः किं कुमारी
भर्त्रे दातुं भर्मशाटीरनेकाः ॥ २४ ॥

वीप्सां लक्ष्म्या विभ्रमादादधानाः
पाथोनारीः पङ्कजाक्षो निरीक्ष्य ।
एता रागादेकदेशोद्विवक्षु-
र्धत्ते मूर्तीरश्ववतीरभ्रदम्भात् ॥ २५ ॥

शेषश्वासैः शीकरैर्धूमतेजः-
पुञ्जैरच्छैः पुञ्जितैर्वाडवाग्नेः ।
पाथोभिश्च प्रायशो वारिराशौ
संपद्यन्ते सर्वतो वारिवाहाः ॥ २६ ॥

स्वैर्लीलोद्वर्तिमीनाभिधेनू
   प्रायो भूयः प्रस्फुरत्कूर्मखेटौ ।
सख्यं कृत्वा शार्ङ्गिणं युध्यतोऽमू
   वल्गं वल्गं वारिमत्स्याङ्ककारौ ॥ २७ ॥

वेल्लद्वीचीविह्वलोऽत्रानुसायं
   कुर्वन्विष्णोः कुड्मलं नाभिपद्मम् ।
चक्रे वेधाः संकुचत्सद्ममज्जं
   भीतो नूनं भिक्षुकत्वापवादात् ॥ २८ ॥

कोपाद्वारात्कुम्भिमोहाद्वनाली-
   दन्तेनाम्भोदन्विधून्दैत्यस्त्वा ।
क्रीडाक्रोडोरिक्षिप्यमाणां धरित्रीं
   गाढं चेतो गाहयत्यस्मदीयम् ॥ २९ ॥

निर्मर्यादं निःसरद्भिः समन्ता-
   दुच्छ्रामानामूर्मिभिर्भोगिमर्दैः ।
पारावारः प्राप्य वेलां पुनस्त-
   न्निःश्वासैः किं नीयते क्षिप्रमन्तः ॥ ३० ॥

पाथोनाथः प्राप्य कूलंकषत्वं
   सद्यो दूरं संकुचद्वारिपूरः ।

विश्वस्यैवं वृद्धिहानी भवेता-
मित्येवोच्चैरेष वक्तीव घोषैः ॥ ३१ ॥

शाखूराणां तादृशामन्तरब्धिः
पाथोमग्नान्पर्वतेन्द्रान्प्रकाश्य ।
वीचीव्याजाद्व्यक्तमुत्क्षिप्य बाहुं
संग्रामार्थं शक्रमाक्रोशतीव ॥ ३२ ॥

अद्याप्यस्यामन्दमन्थानशैला-
घातोद्गीता हन्त बाधा न शान्ता ।
घोरारावो घूर्णितोपान्ततार-
स्फुरच्छायारक्तसिक्तो यदेषः ॥ ३३ ॥

सिन्धुच्छद्मा धिद्वराण्मूलनाना-
रत्नच्छायाराजिपिञ्छं दधानः ।
प्रायेणैवं प्राक्निगीर्णं विधत्ते
कीलोद्वान्तं लेशतो रत्नदम्भात् ॥ ३४ ॥

पर्यन्तेषु प्रस्फुरत्फेनरेखं
मेघश्यामं मेदुरैरिन्द्रनीलैः ।
पारावारं पक्ष्मलाक्षि क्षमायाः
प्रान्तश्वेतं भावये नीलचेलम् ॥ ३५ ॥

वातोद्धूतो वारिधौ भाति वीची-
गुम्भच्छद्मा गूढपात्प्रौढ एषः ।
नो चेदेवं नूतनीं फेनपाली-
निर्मोकालीं निर्मिमीते कथं वा ॥ ३६ ॥

विश्वाक्रान्त्यै विभ्रमादुद्भ्रमन्ती
कल्लोलानां कन्दली सिन्धुबन्धोः ।
वेलारूढा क्रीडया पाण्डिमानं
प्रायः प्राप्ता प्रान्तफेनच्छलेन ॥ ३७ ॥

पाथोदालीभव्यपल्याणपार्श्व-
व्यालोलोद्यद्विद्युदुद्दामरङ्गैः ।
धाटीभाग्भिर्धावता वारिमल्लै-
र्व्यावर्तन्ते वीचिघोटाः सफेनाः ॥ ३८ ॥

नीलीयन्ते लीयमाना नितान्तं
वारां राशौ वारिवाहास्तदूहे ।
पाथोनाथो वाडवज्वालजाला-
दक्ष्णोरेतेष्वञ्जनान्यञ्जयन्ति ॥ ३९ ॥

वीचीव्रातैर्विष्वगाधूयमानैः
शीर्णैर्भूयः शीकरैर्वञ्चिताशाः ।

सिन्धावम्भःसिन्धुराणां मदाम्भो-
लोभादुच्चैर्लोलमूद्देऽलिचक्रम् ।
प्राप्तं दन्तिप्राज्यराज्याधिराज्य-
स्फायच्छाया कम्बरच्छत्रमेषाम् ॥ ४५ ॥

अम्भोराशावम्बुदन्तावलेन्द्रै-
र्व्यारब्धानामावलीषु भ्रमत्सु ।
पाथोमत्स्याः प्राक्तनाः प्रायशोऽमी
मन्थानाद्रेर्मन्थमन्तः स्मरन्ति ॥ ४६ ॥

केलीभेदान्काश्चिदश्वद्रुमीका-
न्पाथोनारीपालिकाः शीलयन्त्यः ।
आवर्तानामात्तमाहात्म्यकानां
तन्वन्त्याशां सन्ति वर्यानुवृत्तौ ॥ ४७ ॥

धावातीता वारिमर्त्यार्भकाणां
सन्ति प्रज्ञा तर्कयामो यदेते ।
पाथः क्षारं पाययित्वा पयोधे-
रम्भोवाहानम्बु तेभ्यः पिबन्ति ॥ ४८ ॥

मन्ये पाथोमग्नभूभृन्निकुञ्जे
भोजं भोजं भोगिकन्या निगूढम् ।

पाथोमर्त्याः पश्य दम्भोलिपाणे-
र्भूयोऽप्यायुः पुष्कलं प्रार्थयन्ते ॥ ४९ ॥

इति कृतवरवर्णिनीप्रमोदो
यदुपतिरर्णववर्णनाविशेषैः ।
निजनगरसविभ्रमेक्षणोद्य-
द्युवतिपरीतगवाक्षलक्षलक्ष्यम् ॥ ५० ॥

आहूय भीष्मकमनन्तरमात्मबन्धु-
वर्गं च सर्वमचिराद्यसुरेव एषः ।
दारेतरस्वविभवानुगुणं विधातुं
वैवाहिकं विधिमुपाक्रमताच्युतस्य ॥ ५१ ॥

इति श्रीदन्तिपोतितदिग्वादीवाधूलमखरत्नखेटश्रीनिवासदीक्षित-
तनयस्य कामाक्षीगर्भसंभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरण-
सरसततलब्धविद्यावैभवस्य श्रीराजचूडामणिदीक्षि-
तस्य कृतिषु रुक्मिणीकल्याणनाम्नि काव्ये
पञ्चमः सर्गः ॥

# षष्ठः सर्गः ।

अथ भीष्मकात्मजकपुंध्वयः स्फुर-
द्विरिशागिवीशपरिणीतिविजीषयः ।
निपरीसमङ्गलमृदङ्गनिस्वनं
मणिपीठमध्यमनयन्वधूवरौ ॥ १ ॥

वसुदेववंशतिलकाय मङ्गलं
जगदक्ष्यभीमजनुषे च मङ्गलम् ।
इति यौवते पठति केचनायले
तनुवः स्म तौ सुरभितैलचर्चितौ ॥ २ ॥

कृतमङ्गलस्नपनकेलिरच्युतः
परिकर्मकर्मकुशलैः प्रसाधितः ।
अवलम्ब्य दारककराम्बुजं ततः
शनकैरगाद्विवाहमण्डपम् ॥ ३ ॥

सुदतीमणीमपि सुगन्धिभिर्जलै-
र्विहिताभिषेचनविधिं विधाय ताम् ।
विविधप्रसाधनविधानदक्षिणा
विपुलेक्षणा न्यधुरुदुत्तमर्पणाम् ॥ ४ ॥

पाथोमर्त्याः पश्य दम्भोलिपाणे-
र्भूयोऽप्यायुः पुष्कलं प्रार्थयन्ते ॥ ४९ ॥

इति कृतवरवर्णिनीप्रमोदो
यदुपतिरर्णववर्णनाविशेषैः ।
निजनगरमविशदीक्षणोच्च-
युवतिपरीतगवाक्षलक्षलक्ष्यम् ॥ ५० ॥

आहूय भीष्मकमनन्तरमात्मबन्धु-
वर्गं च सर्वमचिराद्वसुदेव एषः ।
दारेतरस्वविभवानुगुणं विधातुं
वैवाहिकं विधिमुपाक्रमताच्युतस्य ॥ ५१ ॥

इति श्रीदभ्रितद्योतितदिशापदीपाङ्कमन्यमङ्गलरत्नखेटश्रीनिवासदीक्षित-
तनयस्य कामाक्षीगर्भसंभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरण-
सहजतालब्धविद्यावैशद्यस्य श्रीराजचूडामणिदीक्षि-
तस्य कृतिषु रुक्मिणीकल्याणनाम्नि काव्ये
पञ्चमः सर्गः ॥

इति हंसकः कलयति स्म संमदा-
त्क्वणितच्छलात्किलिकिलारवं किल ॥ ९ ॥

अबलामणेरधिनितम्बमण्डलं
कलिता कयापि मणिमेखला बभौ ।
मदकुम्भिकुम्भतटमण्डनीभव-
न्मणिशृङ्खलामहिमतस्करद्युतिः ॥ १० ॥

सविरेक्षणामणिनितम्बमण्डली-
मधितस्थुषोऽविरतमङ्गजप्रभोः ।
विधृतां पुरो विजयतोरणस्रजं
मणिमेखलां मनसि संन्यधापयत् ॥ ११ ॥

तरुणीमणेस्तदनु कण्ठभूषणा-
दधिकं विवेक्तुमपटुर्विभूषणम् ।
चतुरापि काचन चकोरलोचना
व्यतत प्रसाधनविधौ विलम्बनम् ॥ १२ ॥

द्रुतहाटकद्युतिशरीरविरोचिषः
सुतनोः सुवर्णमयपट्टभूषिता ।
अवलग्नयष्टिरभिकस्य संनिधे-
र्दधती दरोच्छ्वसिततामिवापनौ ॥ १३ ॥

पदपद्ममम्बुजदृशः प्रसाधिका-
करयावकद्रवकरम्बितं बभौ ।
अनुचिन्त्य मङ्गलशिलाधिरोहणं
परिपक्वपाटलिमवैभवं किल ॥ ५ ॥

अनुरञ्जितं पद्मलक्तकद्रवै-
र्विलसाय विभ्रमपवीशिलामणेः ।
अनुवेलमाचिकुरमङ्गतोऽखिला-
क्षरता किलाद्रिमरसेन निर्भरम् ॥ ६ ॥

अनयोः पदोररुणयोः स्वभावतो
भर एव सोऽयमिति यावकद्रवम् ।
नवमौक्तिकांशुसलिलेन दूषय-
न्नतमध्यमामणिरधत्त नूपुरम् ॥ ७ ॥

प्रसवापदं मरमयावकद्रव-
प्रतिबिम्बिताङ्गदनवीनमौक्तिकम् ।
अरुणाब्जमच्छगरुदण्डमण्डल-
स्फुरितोदरं व्यधित पुङ्खितत्रपम् ॥ ८ ॥

चटुलेक्षणाचरणपद्मसंगति-
सुकृतैरलम्भि सुलभेतरा परैः ।

इति बुद्धिमीक्ष्णकजनस्य तन्वती
　　महिलाकुचे मकरिकां पराऽलिखत् ॥ १८ ॥

स्तनयोस्तरङ्गितनिशाविलासयो-
　　र्मृगनाभिकर्दमभृषातमिस्रयो॰ ।
घनतारतारततिभिः परिष्क्रिया-
　　मुचितामकल्पयत नतभ्रुवः सखी ॥ १९ ॥

कमलाक्षि पश्य करमेव नायकः
　　परितः प्रसारयति ते पयोधरौ ।
इति हारमर्पितवतीमियं सखीं
　　कुटिलं व्यलोकत कुरङ्गलोचना ॥ २० ॥

अपि चक्रपीडनकृतापनिन्दिता-
　　कुचभूभृतौ कृतमियोभिपर्पणौ ।
सुषमसहारमुपकण्ठगं च य-
　　द्विभृतः स्म ना किल सुवृत्ततोषिती ॥ २१ ॥

प्रमदापयोधरतटे प्रसाधिका
　　वितताम यां विमलहारमालिकाम् ।
विललास सा विषमबाणभूमिभृ-
　　द्गिरिदुर्गहीरवरणानुसारिणी ॥ २२ ॥

गजकर्णिकाकुसुमकल्पकङ्कण-
च्छलतश्चकोरनयनाकराम्बुजम् ।
सकणीकरग्रहणभावुकस्मृतेः
पुलकाङ्कुराणि पृथुलान्युवाह किम् ॥ १४ ॥

अपरा प्रसाधनविधानकोविदा
सरसीरुहेण समतानिरूढये ।
करभूमिकावलयकङ्कणाञ्चितं
कलयाञ्चकार कमलेक्षणामणेः ॥ १५ ॥

स्फुरणैरुदग्रशुभसूचकैरयं
'स्फुटितं' भवेदिति किमङ्गदं परा ।
अपहाय वामभुजमङ्गनामणे-
रपसव्यमेव भुजमध्यरोपयत् ॥ १६ ॥

कुचकुम्भयोः कुटिललोचनामणे-
स्तनुते स्म पत्रलतिकां तलोदरी ।
सुषमासुधारसभरस्तथाप्यहो
सुतरां बभूव परितस्तरङ्गितः ॥ १७ ॥

अकृत स्वचिह्नमखिलं जगज्जय-
न्मकरध्वजः सुरमहीभृतस्तटे ।

सुदतीमणेः श्रवणयोः सुपक्ष्मया
परया ततः कनकपत्रमर्पितम् ॥ २७ ॥

वदनं विधाय तव वारिजं विधी
रविमण्डलं व्यतत रत्नकुण्डलम् ।
अत एव नित्यमजहत्प्रभाभरं
तदिदं सखीति वदति स्म तां परा ॥ २८ ॥

स्फुरिते कपोलभुवि कर्णभूषणे
तनुतः स्म तालयुगलभ्रमं तनोः ।
मणिदीपमोहमपि रत्नपालिके
लवणिम्नि हारयफलनोन्मुखे मुखे ॥ २९ ॥

निशिताः कटाक्षनिभसायकावली-
र्मुहुरर्जुने किरति हन्त लोचने ।
किमु कर्ण एव वहति स्म कर्णिका-
मणिखेटगूढवपुरङ्गनामणेः ॥ ३० ॥

अधिरुह्य कर्णशिखरं दृगब्जयो-
रवलोक्य दैर्घ्यमधिकं मृगीदृशः ।
नवमुत्पलं नतमुखं कपोलयो-
रविशत्किमन्तरनुबिम्बदम्भतः ॥ ३१ ॥

तपनीयहारसुरुचत्कुचावदः-
प्रतिबिम्बदर्शनपराङ्मुखी परा ।
अथ जानती निजसखीजनस्मितै-
र्भ्रममात्मनः प्रतिमुमोच तं पुनः ॥ २३ ॥

शफरीदृशोऽथ दृशमेवमात्मिकां
समुदीक्ष्य शश्वदधिगण्डमण्डलम् ।
शफरीं कुरङ्गमदशादकज्जलै-
र्लिखति स्म कापि लिकुचस्तनी सुखम् ॥ २४ ॥

स्वपतोऽधिगण्डमभिकृत्य से पुरः
सखि मण्डनं मकरकुण्डलाङ्कुतः ।
भविता ततो मकरिका भरस्तवे-
लपहासपूर्वकमुवाच काचन ॥ २५ ॥

वदनापदेशरतिवल्लभावनी-
पतिकेलिकाभवनजालकभ्रमम् ।
कलयांबभूव कमलेक्षणामणेः
कलितं कयापि मणिकर्णभूषणम् ॥ २६ ॥

अमृताननामृतमरीचिनिःसर-
त्सुषुमासुधौघजलनिर्गमप्रियम् ।

सुदतीमणेः श्रवणयोः सुमध्यया
परया ततः कनकपत्रमर्पितम् ॥ २७ ॥

वदने विधाय तव यामिजं विधी
रविमण्डलं व्यतत रत्नकुण्डलम् ।
अत एव नित्यमजहत्प्रभाभरं
तदिदं सखीति वदति स्म तां परा ॥ २८ ॥

स्फुरिते कपोलभुवि कर्णभूषणे
तनुतः स्म ताडयुगलभ्रमं तनोः ।
मणिदीपमोहमपि रत्नपालिके
लवणिम्नि लास्यफलनोन्मुखे मुखे ॥ २९ ॥

निशिताः कटाक्षनिमसायकावली-
र्मुहुरर्जुने किरति हन्त लोचने ।
किमु कर्ण एव वहति स्म कर्णिका-
मणिखेटगुढवपुरङ्गनामणेः ॥ ३० ॥

अधिगत्य कर्णशिखरं दृगञ्चलयो-
रवलोक्य दैर्घ्यमधिकं मृगीदृशः ।
नवमुत्पलं नवमुखं कपोलयो-
रविशत्किमन्वरतुबिम्बदम्भतः ॥ ३१ ॥

प्रियपीतमप्यधरबिम्बमञ्जसा
किरणामृताप्लुतमियं करोत्विति ।
घुटिकामिवाक्षयसुधोर्मिलां स्वभू-
विहितां वधूरभृत नासिकामणिम् ॥ ३२ ॥

श्वसितानिलेन हसितांशुराशितो
गमिते दिशः स्मरयशःपुलाकके ।
अवशिष्यमाणमिव सारमञ्जसा
बिभरांबभूव पृथुनासिकामणिम् ॥ ३३ ॥

अनुवारमञ्जनकलाञ्जनाञ्जला-
मपरा विधाय मणिशालिकां वधूः ।
कथमप्यथ प्रसृतिलोचनाभगैः
कलयांचकार धृतकज्जले दृशौ ॥ ३४ ॥

भुजभोगिपुंगवयुगाभयं प्रियं
सुषमानिधिं सुरतमियं विलोकिता ।
इति जानती किल परा तदीययो-
रचला सवान नवमञ्जनं दृशोः ॥ ३५ ॥

कुटिलः कुरङ्गमदपङ्ककल्पित-
तिलकस्तिलप्रसवनासिकामणेः ।

अलिकभिया यत्र यदाहृतं क्षुधा
गलितं सुधांशुशकलं मनस्वधात् ॥ ३६ ॥

ललनाललामनिटिले ललामकं
ललितं बभास मृगनाभिनिर्मितम् ।
मदनाभिरूप्यवसुमुद्रणोपमं
मदनाभितातपनिवारणभ्रमम् ॥ ३७ ॥

कुटिलभ्रुवः शिरसि रेखिका बभौ
घुसृणारुणाय मनसेऽनुयायिने ।
चिबुकोपलेन विधिना कपालयो
कृतमारछनेव किमलेन पद्मनिः ॥ ३८ ॥

इति भूषिताकृतिरियं धनीश्वने-
संवरणपूर्णकुरङ्गवल्लिकाम् ।
अभिरामबालाऽङ्कतसूनशालिनी
शतकोटिनीयत विवाहवेदिकाम् ॥ ३९ ॥

मधुरस्वनोऽथ महिते मुहूर्तके
विहितेऽङ्कुरार्पणविधौ पुरोधसा ।
उपहारलोकमभिराजते करे
युवतीमनः किमु पयस्य कौतुकम् ॥ ४० ॥

मधुसूदनस्तदनु भीष्मकार्पितं
मधुपर्कमेष यदसिस्वदन्मुदा ।
समभूदपामशनमेतदेणदृ-
क्सरसाधरामृतभुजिक्रियाविधेः ॥ ४१ ॥

प्रमदाकराब्जपरिमर्शकन्दल-
त्पृथुघर्मतोयपृषतैः कराम्बुजम् ।
अभजत्तरां प्रथममेव सान्द्रतां
चरमं तु दानजलधौ जगत्पतेः ॥ ४२ ॥

अपनीय तन्तुमधिपेन योजितं
सुदृशो गलोऽथ सुतरामदीपयत् ।
स च भूषणान्तरमशेषपुत्रके-
रमुना किलाभरणमन्यदेधते ॥ ४३ ॥

ललनामणेरिनकरमहक्षणे
लघु मंधुकोष करपद्ममद्भुतम् ।
अपि चाद्रिपदमधिरोपितं शिला-
मशनिष्ट चित्रमचिरेण पाटलम् ॥ ४४ ॥

कुचभूमिभृत्कठिनताजिते त्वया-
स्पदमश्मनीयमिति मन्यते परे ।

अधिरोढुमुन्नतमुरःस्थलं हरे-
  रिति मन्महे वयमियं रमा यतः ॥ ४५ ॥

विधिचोदितो विभुरसौ विलासिनी-
  चरणाम्बुजग्रहणमाचचार यत् ।
प्रणयापराधशमनाय भाविनो
  ग्रहणस्य लक्षणपदतामदीधरत् ॥ ४६ ॥

रमणीमणे रमणपाणिपीडिता-
  त्करकैरवात्कमलतो विनिर्गता ।
नवमौक्तिकालिरिव लाजसंततिः
  ककुभां मुखेष्वकुरुत दन्तकौशलम् ॥ ४७ ॥

तपनीयकाण्डपटिकातिरोहितां
  तरुणीमवेक्ष्य यदुवंशशेखरः ।
न चिराद्भविष्यति विलासमंथरां
  नटनक्रियेति निरधारयत्ततः ॥ ४८ ॥

स्मरदेवतार्चनकलाविधित्सया
  कुसुमाञ्जलिं किल वितन्वती वधूः ।
करयोः प्रगृह्य नवमौक्तिकाञ्जलिं
  कलयांचकार कमनस्य मूर्धनि ॥ ४९ ॥

विगलन्स्रजो विभुकिरीटतो वधू-
करमुक्तमौक्तिकमरीचिकैतवात् ।
चरणोद्गतत्वजनितं निजायशः
सुतरां ममार्ज सुरलोकवाहिनी ॥ ५० ॥

दयिताकराम्बुजविमुक्तमौक्तिक-
शुचिधौतवस्त्रपरिधीतमूर्धजः ।
स्मृतिभूमहाहवविधौ शुभोत्तरे
विभुरेष दीक्षित इव व्यरोचत ॥ ५१ ॥

अमृताभिषेचनमिवाचरन्नसा-
वसमायुधायुधकृतार्तिशान्तये ।
अबलामणेरपि शिरस्यवाकिर-
द्विमलां विभुस्तदनु मौक्तिकावलिम् ॥ ५२ ॥

परिगृह्य पाणिकमलेन मौक्तिक-
प्रकरं विभुः प्रणयिनीकचोच्चये ।
प्रचलाकिनीप्रचयपिच्छसंचये
करकावलीमिव घनाघनोऽकिरत् ॥ ५३ ॥

करमुक्तमौक्तिकमरीचिवीचिका-
कलितावगुण्ठनकलां विलासिनीम् ।

कलशाम्बुराशिदुहितुः परीवृतां
कमलाममन्यत सरोजलोचनः ॥ ५४ ॥

अनुदर्शितं हरिरनन्तरं ध्रुवे
दयितामवेक्ष्य दममुख्यमन्युखीम् ।
अददामिनोऽप्यधिकमुन्नतं पदं
किममुष्य नेति किमपि व्यचिन्तयत् ॥ ५५ ॥

विहितेऽथ विभ्रमवसाशिषां भरे
विभुरेव धीरमधिरूढसिन्धुरः ।
अधिरोप्य रत्ननिधिकामणूदरी-
मधिवीथि पौरनयनोत्सवं व्यधात् ॥ ५६ ॥

अथ सौरभाश्रयविकस्वरैलमालेः
वरितः प्रदीपपटलैः प्रमर्पिभिः ।
अतिदूरमन्धतमसे निवारिते
दिवसः किमुत्तरदिशागतः ॥ ५७ ॥

विविधौषधैरव विचित्रदीपिकाः
समदीपयन्कतिपये समन्ततः ।
अपरेऽप्यनेकविधसौरभ्यबे-
र्हरितो मुखानि रतिवेरपूरयन् ॥ ५८ ॥

जयशङ्खसंघकनकानकावली-
सुरवाद्यवाद्यनिनदे निरन्तरे ।
प्रसभं प्रतिध्वनिरिवाभ्रमण्डपे
सुरदुन्दुभिध्वनिभरो व्यजृम्भत ॥ ५९ ॥

गणिकाः क्वणत्कनककङ्कणोत्करा
भरतोदिताभिनयभेदकोविदाः ।
परिमन्दमञ्चितविलाससंपदो
ननृतुस्वरामुभयपार्श्वमीयुषु ॥ ६० ॥

जय पूतनान्तक जयेश केशिह-
जय मल्लसूदन जयाहिमर्दन ।
जय कंसहिंसक जगत्पते जये-
त्यपदानमस्य धुरि वन्दिनो जगुः ॥ ६१ ॥

अवलोकितुं तमवलोपशोभितं
चलितं गजेन तुलितं माणिरिवथा ।
त्वरयोपवीथि पुरयोषितस्ततो
व्यतिभूषमीयुरतिभूमिसंभ्रमाः ॥ ६२ ॥

मसृणैर्विलिप्य घुसृणैः पदद्वयं
सरसेन यावकरसेन च क्रमौ ।

अपहाय चाञ्चिमपहासकारिणीं
　मदनाकुला सुरतनाय कापि तम् ॥ ६३ ॥

अपरा हरीशमपराधकारिणं
　किल मानवीह जलजातलोचना ।
भरिता रुषाय परिताडनाय किं
　द्रुतमेकपाणिधृतमेखलागुणा ॥ ६४ ॥

मणिदर्पणीमदभरापहारिणोः
　स्तनयोरुरीकृत्य घनयोस्तु बिम्बितम् ।
इतरा मृगीदृगितरागमञ्जसा
　निजयालिलिङ्ग सुभगा वपुष्टम् ॥ ६५ ॥

पिटकं धरन्त करकं समुद्गक-
　स्त्वधिपाणिपद्ममविधाय भूषणम् ।
ददृशीव कापि सुदती समुत्सुक-
　स्मरबाणमाशु निरयादपि प्रभुम् ॥ ६६ ॥

प्रणयाकिनी प्रविचलत्कटकस्फुटा-
　स्वरलाञ्छनेन कुचशान्तिचूर्णवर्णा ।
नवनीरजाद्यपि नीलिमश्रिया
　स्तनमानसेऽस्य सुरसार कापि तम् ॥ ६७ ॥

लिखितुं व्यवस्य(?) सखि तुङ्गनासिकं
किमु कंजनाभमुकं विनिर्गता ।
इति कापि कांचिदतिकामकातरां
कुशला जगाद सशलाकिकाञ्जनाम् ॥ ६८ ॥

मदनोऽयमिन्दुवदनो रतिस्त्वियं
भमदा शिरीषसुमदामकोमला ।
अभजं चिराय शुभजं फलं दृशो-
रिति कापि जातनुतिका समाययौ ॥ ६९ ॥

एष एव रमणीरमणीयः
पञ्चबाण इति पामरपाठः ।
इत्युदीक्ष्य यदुवल्लभमेनं
काचिदाकलयति स्म कृशाङ्गी ॥ ७० ॥

आलिरेति करिणाभत एव
प्रेक्ष्यतां यदुपते प्रणयेन ।
एवमालिमपभङ्गजमवाचा
संलपन्त्यतम संभ्रममेका ॥ ७१ ॥

मार्ग्गिणि स्मरहविर्भुजि पिण्डा-
साधिनं मरममस्य विषादम् ।

कन्यका च कथमाचरणाञ्च-
लाब्जजालममानकराब्जा ॥ ७२ ॥

साध्वसाभिनयसंभृतकम्प-
प्रेयसीमनुपगूहनहृष्टः ।
तारमीक्षि भवनस्य ततोऽसौ
दोलिकाविहृतिसौख्यमयासीत् ॥ ७३ ॥

रत्नवल्लिरचना रमणीया-
रात्रिकारचनकेलिचणाभिः ।
वर्धितो वरतनूभिरथासौ
वन्दते स्म पितरौ गृहमेत्य ॥ ७४ ॥

अङ्घ्रिमीह रभसाद्विनतं
मद्र मातृभिनि तत्क्षमितोऽपि ।
प्राञ्जलिः पुरत एव स तस्थौ
प्रश्रयः प्रकृतिरेव महताम् ॥ ७५ ॥

मातरं मदनु मातृसपत्नी-
शारदेन विनमप्रविलोकम् ।
मानयन्गुरुजनानपि सर्वा-
न्मातरं निजमिवाप स सम्मदम् ॥ ७६ ॥

द्वारचारुमणितोरणरम्भा-
काञ्चनक्रमुकचित्रवितानम् ।
सूनलाजसुभगंकरणोर्वी-
रङ्गवल्लिरचनारमणीयम् ॥ ७७ ॥

काञ्चनाकलितकृत्रिमपुत्री-
चाल्यमानसितचामरगुच्छम् ।
राजमानमणिमण्डपराजी-
मध्यसंघटितमौक्तिकमञ्चम् ॥ ७८ ॥

नूत्नरत्नततिनिर्मितनाना-
द्वारसारतपनीयकवाटम् ।
प्राङ्गणप्रचलगन्धकरीक्षा-
लोलकेलिमृगलोचननीलम् ॥ ७९ ॥

नृत्यमानकृतलम्बनसृष्टी-
चामरस्तबकदर्पणमाढ्यम् ।
केलिहंसशुककेकिकपोत-
गानपुष्टमणिपञ्जरपुञ्जम् ॥ ८० ॥

कल्पवल्लिमिव कल्पनविभ्रमां
निमलसुस्मितमिषाद्विरचुतिम् ।

रुक्मिणीं रुचिररूपशालिनीं
रञ्जयन्त्यतिमुदाह तत्र या ॥ ८१ ॥

सा सखीजनवचोऽवमानती
कर्णदास्यमिव संगमे नवे ।
औषधैरिव गुरूक्तिभिर्वधू-
र्न व्यवर्तत न वाममस्पतिम् ॥ ८२ ॥

सा कथंचन सखीजनैस्तदा
प्रापिता शयनधाम कामिनी ।
चित्रितप्रियतमं मणीमय-
स्तम्भमाश्रयितुमप्यलज्जत ॥ ८३ ॥

प्रापितापि शयनं प्रियस्य सा
गन्तुमैच्छत सखीजनैः समम् ।
वीक्षिताप्यनयत दृष्टिमन्यतो
भाषिताप्यभजत मौनमुत्तरम् ॥ ८४ ॥

शायितापि शयने कथंचन
ब्रीडयाऽजनि वपुः पराङ्मुखी ।
अंगुलाग्निनिरपीडितानि सा
धारयं परमम्लानताबशा ॥ ८५ ॥

निद्रयेव दृढमीलितेक्षणा
लज्जयाथ शयने सलोदरी ।
चुम्बिता प्रणयिना निनिन्द सा
प्रोन्मिषन्ति पुलकाङ्कुराण्यलम् ॥ ८६ ॥

कञ्चुकं व्यपनयत्यथ प्रिये
स्वस्तिकं समतनिष्ट भामिनी ।
सस्पृहं प्रियतमोऽपि सस्वजे
वञ्चितोरुकुचमर्दनं बहिः ॥ ८७ ॥

रत्नदीपविरथासु फूत्क्रिया-
स्वङ्गना मुकुलितेक्षणा स्वयम् ।
अंशुकं हरति वल्लभे बला-
त्सस्वजे तदवलोकनह्रिया ॥ ८८ ॥

यामे भागे हिमगिरिसुतामिन्दुमौलेः स्फुरन्तीं
वक्षःसीमन्यपि मुररिपोर्वारिराशेः कुमारीम् ।
आलेख्येषु प्रणयसुभगं दर्शयन्वीतलज्जां
कारं कारं चिरमरमयत्तां नवोढां स वोढा ॥

इति श्रीराजचूडामणिदीक्षितस्य कृतिषु
रुक्मिणीकल्याणनाम्नि काव्ये
षष्ठः सर्गः ॥

पावकात्किमु ततः परिपक्का-
त्क्षिप्रमेव पवनः क्षयमाप ॥ ४ ॥

गाढमातपभरादिव गन्तुं
कातरे सति समीरकिशोरे ।
मन्महे मसृणशिञ्जययासौ
जायते स्म जगति स्मरवीरः ॥ ५ ॥

प्रज्वलत्सु दवपावककीले-
र्षणकोशभवनेषु वनेषु ।
केलिलोलललनानयनाह्वः
केवलं समचरद्विषमाह्वः ॥ ६ ॥

विस्फुरद्विमलवेणवमुक्ता-
व्याजलाजविहिताञ्जलिहोमाः ।
प्रत्यपद्यत शुचिर्वनभूमीः
संनिधौ दवसमीरसखस्य ॥ ७ ॥

मारुते बत गतेऽपि वयस्ये
कालपर्ययवशात्कृशिमानम् ।
याव एव दवभीप्सि विजज्ञे
कृष्णवर्त्मनि किमस्ति सुहृत्त्वम् ॥ ८ ॥

पक्ववेणुपरुदुद्गतमुक्ता-
दावपावककणावलिदम्भात् ।
कंजभूः करकवामवकोपा-
दङ्कुरणार्थमकिरद्दिवि बीजम् ॥ ९ ॥

पक्षवर्चिरवलोक्य यवाभे-
ष्वाह धूमवलयं जलमभ्रे ।
चञ्चलस्थपलशारिदशङ्कां
चातकश्चटुलचञ्चु ययाच ॥ १० ॥

वेणुपर्वविवरोद्गतमुक्ता-
कैतवेन मरुकाननभीमा ।
निष्ठुरातपनिरन्तरतापा-
स्स्फोटजातमधिकं स्फुटमूहे ॥ ११ ॥

मूर्छरच्छतरमौक्तिकरोचिः
पुञ्जकूटघटितचामरचारैः ।
विह्वलां तपनतापविशेषै-
र्वेणवो वनभुवं किमवीजन् ॥ १२ ॥

शाल्मिमूलगतमस्मदभिन्नं
रम्भदेवदाभिरक्षति शैत्यम् ।

इत्थमाहितरुषा किल देहे
  काननं झटिति घर्मदिनेन ॥ १३ ॥

आमृशन्नपुनरस्थिविपातं
  कूपवारिषु गभीरतरेषु ।
नातनिष्ट नलिनीपतिरुष्मी-
  नन्यथा कथमिमानि हिमानि ॥ १४ ॥

दूरिता द्रुततरं भुवनेभ्यः
  शीतता भृशमशीतकरेण ।
किं न्वकारि शिशिरत्वकृते सा
  वेधसा वरतनूकुचभूवे ॥ १५ ॥

मुग्धशीतकरमौलिनिवास-
  स्थानमेतदिति किं स्थिरभावाः ।
आश्रयन्त वटमूलमशेषै-
  रातपैरमिहता जडिमानः ॥ १६ ॥

अन्तरम्बु जडतामतिगूढां
  शोषयन्झटिति शोषितपाथाः ।
उष्णभानुरुदरं सरसीनां
  निर्बिभेद निजपादपटिम्ना ॥ १७ ॥

भाविनं घनघटैरुपरोधं
संविचिन्त्य नु सहस्रगभस्तिः ।
आरसातलमभिन्त धरित्री-
मात्मनो वसुचयानपिधातुम् ॥ १८ ॥

विस्फुरद्विवरभागविनिर्य-
द्भोगिरत्नरुचिपुञ्जमिषेण ।
मेदिनी मिहिरपादहता द्रा-
गाननेन विववाम किलास्रम् ॥ १९ ॥

मेदिनीविवरतो मुहुरुच्चै-
रुच्छ्वसत्युरगलोकफूत्कारैः ।
देहदीधितिरवीकरदुर्व्या
मारवे पथि मरीचिनिवेश ॥ २० ॥

व्योमसीमनि विचुम्बरमुच्चै-
र्जृम्भते मरुमरीचिवितानम् ।
काननानलकदर्थनभीत्या
सृष्टमम्बुभरमम्बरसद्भिः ॥ २१ ॥

विस्तृतं मरुमरीचिवितानं
वीक्ष्य वीक्ष्य जलविभ्रमतोऽध्वे ।

आकुलेषु बहुधार्यमरण्ये-
ष्वाविरास दिवसेष्वथ दैर्घ्यम् ॥ २२ ॥

अम्बुधेरपसृतेषु विदूरं
पारदेशमपहाय पय सु ।
सैकताध्वनि शनैरिलरण्ये
याति किं ययुरहानि विवृद्धिम् ॥ २३ ॥

आनिशागमनमुज्झितकीडा
स्वयमोपलतटीष्वपराह्णेः ।
अङ्घ्रिमर्पयितुमर्कतुरङ्गै-
ष्वाकुलेष्वहरगाहत वृद्धिम् ॥ २४ ॥

विभ्रमक्षुपि वियद्गितताभि-
र्देह्यमानदवधूमलताभिः ।
अक्षमे त्वरितमध्वविवेके
द्राधिमा किमभवद्दिवसेषु ॥ २५ ॥

आदधभिमृतमातपसेवां
शम्बराहितसमीरनिरोधः ।
शीतकममुपनीतनपश्री-
र्घामर. किमु वयोऽभिषमाप ॥ २६ ॥

विश्वदिग्विजयविश्लथकाङ्क्षे
पञ्चबाणधरणीपमणीन्द्रे ।
शर्वरीपटकुटीं समयोऽस्मा-
दञ्जसैव समकोचयदह्वा ॥ २७ ॥

वीतमारुतविवर्तनवार्ते
वृद्धिमेयुषि विशिष्य निदाघे ।
तामसीकपटकालभुजंगी
तादृशं किमवहत्तनिमानम् ॥ २८ ॥

दिष्ट एव दिवसेषु निरम्ब-
न्मारुतं जनितमांसलभावः ।
मन्दमन्दममुकं किमु भुक्तं-
स्तामसीषु तनुभावमयासीत् ॥ २९ ॥

पावनाचरितदूरतरस्य
श्यामशो भुवनतापकरस्य ।
अद्भुताय समयस्य न दोषा-
हानिवृद्धयमिदं तु शुचित्वम् ॥ ३० ॥

पादपातमधिगत्य पतङ्गा-
स्पर्शिनीपरिवृढोपलसंघः ।

कोपतः किल ववाम कृशानुं
कः सहेत समहाः परिभूतिम् ॥ ३१ ॥

शांभवाक्षिशिखिनः किमु मत्तो
भूयसी भुवनतापकतेति ।
प्रस्थितोऽजनि परीक्षितुकामो
राजताचलतटीं रविरद्धा ॥ ३२ ॥

दक्षिणां दिशमयं निजसूनो-
र्दर्शनाय किल दण्डधरस्य ।
चन्दनाचलतटीचटुलाहि-
प्रेक्षणान्निववृते पतिरह्नाम् ॥ ३३ ॥

आश्रयत्यतिसमीपमनूरा-
वाकुलानहिशिशूनवलोक्य ।
मन्महे मलयतो दयमानो
नायको निववृते पतिरह्नाम् ॥ ३४ ॥

शोषयञ्जलमशेषमपाम्भ-
न्मारुतं विदलयन्महिभागान् ।
यावधूमततिधूमरिताभ्र-
स्तेज एव तनुते स्म स कालः ॥ ३५ ॥

माधवाधिगवमांसलभावा-
मोदशालिषु मनोदमनोऽसौ ।
आतपोऽधित विरोचनजातः
शुक्रमाह्यसुलभामभिवृद्धिम् ॥ ३६ ॥

प्राप्त एष सुदृशामुपकारः
माकनेन सुकृतेन मयेति ।
नृत्यति स्म निचयो व्यजनानां
संघटेत सकलं हि सुवृत्ते ॥ ३७ ॥

आतपैरधिकमाहितताप-
कृष्णदीधितिकरद्रुचदुद्भ्यः ।
पातुमैहत पयांसि समन्ता-
त्कल्पयन्करसहस्रमजस्रम् ॥ ३८ ॥

आततृष्णमपिबन्नवशाला-
पालिवारिजदृशां पथि पान्थाः ।
आननैर्न परमम्बु मनोज्ञं
लोचनैश्च लहरीं लवणिम्नाम् ॥ ३९ ॥

कोष्णमेवदमृतं करकस्थं
पीयतामधरभाजनगुप्तम् ।

इत्युदीतहसितामिह पाथः-
पालिकां परिचुचुम्ब युवैकः ॥ ४० ॥

अङ्गमङ्गममृतद्रवशीतं
कल्पयेः सुमुखि ते करकं चेत् ।
अङ्गजार्तिरतिशान्तिमयेते-
त्यभ्यगः स्मितमदाज्जलदाऽयै ॥ ४१ ॥

प्रक्रमे मधुसिथं प्रतिरुद्धो
मारुतो जनितमांसलभावः ।
पाथसामिव ततः परिवाहो
भग्नसेतुरगमान्प्रचभङ्ग ॥ ४२ ॥

वारिशोषणकरं घनवृन्दै-
र्वारयार्कमिति वारिदवाहम् ।
मायितुं नु जलनाथनिदेशा-
त्प्राङ्मुखोऽजनि तदा 'पवमानः ॥ ४३ ॥

पौरजालपदपालिविसृष्टं
वातशाटवलयं चलदभ्रे ।
पांसुषक्कपटारवमानः
पांसुके पथि चरमहररिकम् ॥ ४४ ॥

भानुधामपथिकश्रमपाथो-
दह्यमानदवधूममरुद्भिः ।
अन्वमायि नचिरादभिवृद्धि-
र्ज्योतिरादिजनुषां जलदानाम् ॥ ४५ ॥

तारानाथशिलैकक्लृप्तमिहिकाधारागृहाभ्यन्तरे
पाटीरद्रवपङ्किलं मणिमयं पर्यङ्कमासेदिवान् ।
फुल्लन्मल्लिमरन्दपूरशिशिरे भूवल्लभो निष्कुटे
तन्वीसूक्तिभिरेव घर्ममनयत्तादृशानन्दथुः ॥

इति श्रीदन्तिधीविदितवादिपाङ्कसव्यमल्लरत्नखेटश्रीनिवासदीक्षित-
तनयस्य कामाक्षीगर्भसंभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरण-
सहजतालब्धविद्यावैशद्यस्य श्रीराजचूडामणिदीक्षि-
तस्य कृतिषु रुक्मिणीकल्याणनाम्नि काव्ये
सप्तमः सर्गः ॥

## अष्टमः सर्गः ।

---

कन्दलप्रबकदम्बकोरकैः
  केतकास्फुरणकेलिकारकैः ।
वावदूकबलवैरिवाह्नै-
  र्वासरैरजनि पान्थमोहनैः ॥ १ ॥

चातकार्भककुलं कृपाकुलं
  चञ्चलाक्षिवलनेन वीक्ष्य किम् ।
प्रावृडाविरभवत्पयोधर-
  प्रस्नुताधिकपयःपरिष्कृता ॥ २ ॥

काननावलिकृशानुकीलया
  कल्पितैर्गगनकूटभाजने ।
कज्जलैरिव निकामकर्बरैः
  कालमेघनिकरैरभूयत ॥ ३ ॥

कल्पये जलमुचां कदम्बकं
  रोहितोरुमणिदण्डमण्डितम् ।

आतपैरधिकमङ्कुरद्रुजो
नीलमातपनिवारणं श्रिवेः ॥ ४ ॥

घर्मतापघनया नभःश्रिया
स्वर्णदीकृतसुखावगाह्या ।
स्यन्दमानजलबिन्दुसुन्दरः
किं व्यतानि घनवृन्दकुन्तलः ॥ ५ ॥

व्यञ्जयन्धुरि मयूरपिच्छकां
विश्वचक्षुरविधानदक्षिणः ।
सर्वतः समयमायिकः क्षणा-
दभ्रपुष्पमकिरत्कराञ्चितम् ॥ ६ ॥

वारिदाश्वघटया वलत्तटि-
द्वल्गयानुमृतवारिवेगया ।
गर्जितच्छलगभीरहेषया
वल्गितं वियति वल्गुधारया ॥ ७ ॥

सिन्धुचूषणकलासु कौशलं
शीलितुं कलशजन्मनो मुनेः ।
नीरवाहनिवहेन शिश्रिये
चन्द्रनाचलचमत्कृता दिशा ॥ ८ ॥

वंशदण्डदृढिवैरिधन्वना
   पट्टगुच्छदाचिरप्रभाजुषा ।
इन्द्रनीलचतुरन्तयानवा-
   नम्बुदेन समयाधिभूरभूत् ॥ ९ ॥

प्रज्वलत्यशनिपावके भृशं
   तादृशं तपनहेम तापयन् ।
किं व्यधत्त घनसिक्थकान्तरे
   रेखिकामचिररोचिषो मिषात् ॥ १० ॥

काननानलशिखाकदम्बकं
   भावयन्मनसि भावि वैशसम् ।
चञ्चलानिचयचातुरीं वहन्
   नीरवाहनिचयानमेवत ॥ ११ ॥

पूर्वमारुतमिषेण फूत्क्रिया-
   मारचय्य समयाहितुण्डिकः ।
अम्बुभृत्कपटपेटकान्तरे
   विद्युवः फणिवधूर्व्यलासयत् ॥ १२ ॥

प्रायशः पथिकपद्मलोचना-
   प्राणवायुभरपारणाकृते ।

वारिवाहफणिभिर्विषोत्करै-
र्विद्युदालिरसना विसारिताः ॥ १३ ॥

नीरदं किमु निरीक्षितुं चिरा-
दागतं शिखिकदम्बमादरात् ।
चन्द्रकस्फुरणचातुरीमिषा-
च्चारु लोचनसहस्रमाददे ॥ १४ ॥

शातमन्मथशरासकोणया
वीणया किमपि वेल्लितस्वरात् ।
षड्जमुज्ज्वलगुणं वलाहका-
दध्यगीषत कलानि केकिनाम् ॥ १५ ॥

चट्टयन्त्ररुचिरकान्तियष्टिकां
तत्तदोमिति च गर्जितैर्गृणन् ।
नर्तनं नवरसोदयोचितं
केकिसंसदमशिक्षयद्घनः ॥ १६ ॥

वारिदो वनशिखण्डिसंसदां
नृत्तकेलिनिबरीससंमदः ।
आततान हरिकोपकैतवा-
द्वज्ररागनिकराभिषेचनम् ॥ १७ ॥

बाडवज्वलनसंगतां घन-
श्रेणिकासु चिरवासनावशात् ।
विस्फुलिङ्गविततिं विसृत्वरीं
शक्रगोपपटलीं शशङ्किरे ॥ १८ ॥

नीरवाहनिनदैर्विदूरमू-
र्जायते जगति रत्नसूरिति ।
शक्रगोपमिषरत्नसंकुला
संबभूव सकलापि मेदिनी ॥ १९ ॥

क्वापि राजनि गते हठाज्जले
मज्जयत्यथ मलिम्लुचे घने ।
शक्रगोपमिषरत्नसंचयो
व्यञ्जितो नु बत रत्नगर्भया ॥ २० ॥

मेदिनी निजरजोविमुक्तये
मेदिनी विहितमज्जना जलैः ।
व्यञ्जयत्तनुरुहाह किं तृणाङ्-
कुरजालपुलकाङ्कुरावलिम् ॥ २१ ॥

वारिशोषकमिनं बलाद्दै-
वोरयेति बधनं जलेशितुः ।

श्रावयन्बलभिदं तदीरितैः
  प्रावृणोत्पुनरिनं मरुद्धनैः ॥ २२ ॥

आतपैरभिहते निजे मृगे
  हर्तुमेष हरिणं सुधानिधेः ।
आततान घनजालमम्बरे
  मार्गसंवरणरोधि मारुतः ॥ २३ ॥

पद्मिनी प्रणयिनि प्रभापतौ
  बन्धभाजि घनबन्धनालये ।
निर्निरोधविरहानलाहता
  निर्ममज्ज नियतं सरोजले ॥ २४ ॥

कोकबान्धवकुमुद्वतीविटौ
  कीर्तिलेशमपि न स्मरिष्यतः ।
भोगिभोगशयनेन यत्तदा
  निद्रया दृढनिमीलिताविमौ ॥ २५ ॥

गर्भितभ्रमरकं करण्डकं
  कल्पयन्कुटजकैतवाभमाः ।
षड्डलापटिमुग्धोऽचरीकर-
  स्तायतोऽम्बरमणिप्रमोषणम् ॥ २६ ॥

शीर्णकङ्कणमपास्तहंसकं
किं च दूरमवधीरिताम्बरम् ।
व्यञ्जितस्वरविशेषकंधरं
विद्युता व्यहृत वारिदागमः ॥ २७ ॥

भूपधन्वगुरुकुलं महेन्द्रगि-
र्याहितस्थितिरपास्तरेणुकः ।
अम्बुवाहजमदाभिभूरमा-
वर्जुनस्फुरणमादधेऽद्भुतम् ॥ २८ ॥

किं गिरीशमुपकण्ठकल्पिता-
नल्पशिल्पपरिरम्भसंभ्रमा ।
प्रालेया फलयति स्म संमदा-
भूरिदर्पभरनिर्भरं तदा ॥ २९ ॥

मानिनस्य महनायमाक्षिप-
न्नागिनीव रजनी घनाश्रयात् ।
सर्वमाक्रमत पद्ममन्यथा
सर्वदान्धतमसं कथं भवेत् ॥ ३० ॥

आपगाधिकिभिराननैर्नवे-
दाननिष्पदभिशृङ्गियम्बुभिः ।

वारिदे पिबति वारि निर्भरं
नाभविष्यदचिरान्नदीपतिः ॥ ३१ ॥

नीरवाहनिभघर्मभस्त्रिका-
नीतवारिनिधिनीरशीकरैः ।
सिञ्चतीव सरणिं घनागमो
विश्वदिग्विजयमादरे स्मरे ॥ ३२ ॥

नीरवाहनिभनीलशाटिको-
ल्लोचलोलहरिचापतोरणम् ।
धारया तरलमौक्तिकस्रजा
व्योम कामसदनं विदिद्युते ॥ ३३ ॥

वारिवाहनिवहाः पिबन्त्यमी
वारिपूरमनिवारितं न चेत् ।
आपगाभिरभिपूरितः क्षणा-
दाक्रमेत जगदम्भसां निधिः ॥ ३४ ॥

कञ्जनालिकमशेषमादरा-
च्छीलवत्सुनिचयं सरोप्रभुः ।
वारिदान्तिकमु विधाय सेवतः
पङ्कजम्बुफलजालमादधे ॥ ३५ ॥

मारुतोद्भवममुं महीयसा
गर्जितेन कृतकर्णदुर्व्यथम् ।
धार्तराष्ट्रधृतिहारिणं घनं
भीममेत्य मुमुदेऽद्भुतं बकः ॥ ३६ ॥

नीरवाहनिभनाकभूवल-
द्विद्युदावलिबिलेशयोद्भवा ।
अण्डपङ्क्तिरलसद्बलाकिका-
मालिकाकपटतो मरुत्पथे ॥ ३७ ॥

भूरिसंकुचितपुष्करं करो-
दञ्चितोरुतरशीकरोत्करः ।
वारिवाहमरवारणावले-
र्भ्रामेरैरिव बकैर्भ्रमत्कृतम् ॥ ३८ ॥

मानसोन्मुखमरालमण्डली-
चञ्चुमुक्तबिसवल्लिचातुरीम् ।
आततान पुनरुक्तवैल्लरी-
मातता बकपरम्पराम्बरे ॥ ३९ ॥

वारिदेन बहुवर्षशालिना
नीरदत्वमुषितं निपेदुषा ।

पाथोदस्वरमण्डलीफलकभूपर्यायलोलास्तटि-
त्तन्त्रीरार्द्रतयातिघर्घरतरोत्तालस्वरव्यञ्जिकाः ।
शश्वद्वालयतः पयोदसमयाद्गानं समभ्यस्यतां
प्रायेण प्रचलाकिनां समभवद्गीतिस्वरो विस्वरः ॥

अम्भोदच्छलशल्यकाः पटपटद्दम्भोलिघुर्घूरवो-
द्दामा हाटकटङ्कपाटलतटिद्दंष्ट्राविटङ्कोत्कटाः ।
धाराव्याजशलाङ्कुरोत्करकिरः प्रागाशुगोत्साहिता
सुप्ता जग्ध्यवशोषिताः करमिपात्त्रस्ताः समातन्वत ॥

धूमो बाष्पपरिप्लुतास्तनुभृतां दृष्टीर्विधत्ते स्पृश-
न्दूरादेव तु धूमयोनिनिवहो दृष्टोऽध्वगानां दृशः ।
वारिभ्रैरतिरिच्यते स्वजनकं कश्चिज्जगत्यां जनः
कुम्भोऽम्भः पिबति स्वयं परिमितं कुम्भोद्भवस्त्वम्बुधिम् ॥

चोरं चोरमशेषमात्मवसुसंभारं सरोजेक्षणे
स्वैरं गूढपदाहितातिनिभृतस्वापे दुरापेऽम्बुधौ ।
जृम्भद्गर्जितभीषणाः प्रतिफलं जम्भारिचापोद्भटाः
प्रायो विष्णुपदस्पृशोऽभिघमभजन्पायोधरा यामिकाः ॥

## नवमः सर्गः ॥

असमशरशरासकेलिकारै-
रचिरपचेलिमकेकिनीनिकारैः ।
सरसिजकुशलाङ्कुरप्रकारैः
समजनि शारदवासराधिकारैः ॥ १ ॥

महति कुमुदिनीमहोत्पलिन्यौ
सरसि निमग्नतनू समुद्दिधीर्षुः ।
उडुपतरणिमण्डलोपनेता
समजनि शारदप्लवकर्णधारः ॥ २ ॥

उदयमुपगतोऽयमब्जबन्धुः
सरसि निमग्नतनुं समुद्धरेन्माम् ।
इति किल यद्दिरीषदुच्छ्रितोऽमू-
रमथमपलाशमिपात्करो नलिन्याः ॥ ३ ॥

विरहविहतजीवनानुबन्धा
ननु नलिनी पुरतो निरीक्ष्य नाथम् ।

अवनमितमुखीत्रपानुषङ्गा-
दभवदधोमुखबिम्बिताब्जदम्भात् ॥ ४ ॥

प्रतिफलनमिषाद्विजोपकण्ठं
प्रणयिनमागतमङ्गिनी सरागम् ।
प्रतिफलितमधोमुखं पयोजं
सुतनुरपदिश्य वलन्मुखी चुचुम्ब ॥ ५ ॥

दिवि दिवसमणिं निरीक्ष्य साक्षा-
दभिनवमम्बुजमन्तरङ्कुरद्रूपः ।
निगदितुमिव नीरजप्ररोहेभ्यः
प्रतिफलनच्छलनः पयो जगाहे ॥ ६ ॥

अलिपटलमवेक्ष्य लोलमारा-
दहह बलाहकजालशङ्कि चेतः ।
मुकुलमधिकमुग्धमम्बुजाना-
मविशदधः सलिलेषु बिम्बदम्भात् ॥ ७ ॥

सरसि कराग्रले सरोजिनीव
समधिकमुखनालपद्मदम्भात् ।
प्रतिमिव पवनप्रचारमुक्तं
प्रथममुपरिक्षितुमुन्मुखी बभूव ॥ ८ ॥

शुकततिवपुषा सुराधिनेतु-
विचयति चतुर्लतिका विपर्ययं सीत् ।
चतुरभिनवबन्धुजीववेषा
बलरिपुकोपगणा वसुंधरायाम् ॥ ९ ॥

सकलभुवननिर्निमेषपद्मा
विहितकलाधरवैभवा विशेषात् ।
शरदुपचितबन्धुजीवसंप-
द्विधिरजनीति न विस्मयोदयाय ॥ १० ॥

अभिनवशरकाण्डपाण्डुरश्री-
रमलपयोधरभारलोभनीया ।
शुकततिशुभरोमराजिरम्या
शशधरगर्भवती शरत्प्रकाशे ॥ ११ ॥

शिथिलितबकमालिकादुकूलं
शिव शिव दिष्टविदे नभोरमायाः ।
हरति किमु हठेन मेघकेश्या-
द्दलितमुकुन्दमुमलिनगर्मकेण ॥ १२ ॥

जगति जलधरैर्गृहीतमुक्तं
चुलुकयितुं चतुर्णवांजलौघम् ।

कलशसुकृतकन्दलं मुनीन्द्रं
शरदुदलासयदभ्यसेवि शङ्के ॥ १३ ॥

कतिचन गगनेन्दिरोरुनासा-
मणिममलं कथयन्ति कुम्भबिम्बम् ।
कलुषितसलिलप्रसादहेतोः
कतकमहं कलये शरद्दीतम् ॥ १४ ॥

सुलभभयतया घनान्धकारे
सुचिरमिमा रचितैकदेशवासाः ।
नियतमुदयति दिशामधीशे
निजनिजधाम दिशो दशापि भेजुः ॥ १५ ॥

विमतविजयकेलिसाहसिक्य-
प्रगुणसमुद्यमशालिनां नृपाणाम् ।
करिकलभघटापटोरुशुण्डा-
हतिभयतो हरितो गता विदूरम् ॥ १६ ॥

स्फुटनमितमुखं निपीय मूल-
स्फुरितपयोरुहनालवारिपूरम् ।
समजनि फलमावालिमदानीं
ममजनि पाटलिमस्फुरन्मुखश्रीः ॥ १७ ॥

हसदभिनवमूलहस्तकोशैः-
प्रसृमरघूलिपरंपरानुषङ्गात् ।
समधिकमरुणैरभावि सद्यः
कणिशगणैः कलमाङ्कुरस्य नूनम् ॥ १८ ॥

कलमकणिशचारुचञ्चुकोटिं
पथि पथि कीरपरम्परां विशङ्के ।
श्रवणमधुरशालिपालिगीति-
स्वरविजितोक्तिनया तृणं चरन्तीम् ॥ १९ ॥

मणिभिरनुकलं प्रतीक्षुमुक्तैः
मविघवधूकलगीतिकाविलीनैः ।
अरदि समजनिष्ट शालिसीमां
सततमुदञ्चितसारिणीजलेव ॥ २० ॥

निभृतमनुलतागृहं निशाशा-
कृतरतिकेलिषु शालिपालिकासु ।
किमु रतिकितवो धृतीक्षुचापो-
द्वलितमणीगुलिको ररक्ष शालिम् ॥ २१ ॥

समुदयसमयद्रवीकृताभि-
र्मणिततिभिः स्फुरितैर्धृतीक्षुकाण्डाः ।

किमजनिषत शालिपालिनारी-
सुमधुरगीतिसुखोदिताश्रुपूराः ॥ २२ ॥

सुखविहितमुरारिबोधमुद्रो
विलसदगस्त्यमहाविकासिबाणः ।
समजनि भुवि शारदावतारो
विहितमयूरविजृम्भणो विचित्रम् ॥ २३ ॥

जडमपि जनितप्रसादमन्त-
र्जगति वितन्वति शारदावतारे ।
समजनि सरसोक्तिभिः कवीन्द्रै-
रिति कियते भविताद्भुतोदयाय ॥ २४ ॥

भुवनमवनशोषमेव दृष्ट्वा
पुनरनवेक्ष्य पुरः प्रदेयमर्घ्यम् ।
किमु घननिवहैरवदा ललम्भे
किमपि विलक्षतया वलक्षभावम् ॥ २५ ॥

अनुपदमुदयोन्मुखीं हिमानी-
मधिनिजगर्भमिमाः किमादधानाः ।
प्रतिनवशारदकाण्डपुण्ड्रकर्षा
प्रतिपदमानशिरे पयोदरेखाः ॥ २६ ॥

अनुकलजलसेचनव्यपाया-
    द्वनकुलकोलिशखण्डमण्डलानि ।
अशनिहुतवहोरुहेतिदाहा-
    द्दलमलभन्त दिशां विभूतिराशेः ॥ २७ ॥

दिविषदधिपदिङ्मुखोपजात-
    श्रमननिकाममलीमसस्वभावौ ।
विधुरविमुकुरौ विमार्ष्टुकामो
    घनभसितं कलयांबभूव कालः ॥ २८ ॥

जलधरसमयं जवेन जित्वा
    किमु शरदागमकैतवप्रवीरः ।
घनपटलपटीकुटीरवाटी-
    मनयत भस्मदशाममुष्य नूनम् ॥ २९ ॥

मलिनमपि महेन्द्रचापवल्ली-
    मिलदचिरांशुगुणेन मेघकुलम् ।
असकृदहह घट्टयन्ननेहा
    किमु कुरुते स्म शनैर्जहत्कलङ्कम् ॥ ३० ॥

परिसरभुवि खेलनं बकानां
    परिचयमेत्य चिरं परम्पराभिः ।

जलधरनिवहा जगाहिरे किं
 धवलिमतत्त्वनतां धुरंधरत्वम् ॥ ३१ ॥

त्रिदशपुरतरङ्गिणी तटान्त-
 प्रहसितकाशपरम्परावकाशैः ।
दिशि दिशि दिविषत्पथावकाशे-
 ष्वतिविशदैः शरदम्बुदैश्चकाशे ॥ ३२ ॥

वियति पुलिनमण्डलानि विष्व-
 ग्विमलबलाहकलेशविभ्रमेण ।
विरमति जलदागमे कथंचि-
 द्वियुधधुनी किमुदञ्चयांचकार ॥ ३३ ॥

जलपरिचयमेचकीकृताः प्रा-
 ग्दिनमणिदीधितिभिः शनैर्विभिन्नाः ।
दिशि दिशि परिकीर्णतारमुक्ता
 जलधरशुक्तिततीर्जहावनेहा ॥ ३४ ॥

धवलजलदकोऽपदिश्य धारा-
 धरनिकराभियतं वराप्सरीशाः ।
हरि सपदि दिवस्पर्यां विचिन्त्य
 प्रकटितहाटकपटाम्बरा बभूवुः ॥ ३५ ॥

जलनिधिजलजातमश्वरत्नं
करिवरमभ्रमुकामुकं च दृष्ट्वा ।
सपदि समभवन्धना बलक्षाः
शतमखवाहनतासमानभावात् ॥ १६ ॥

नियतमयमनन्तकुण्डलीन्द्रः
शरदि विधौ शनकैः समुत्थितेऽस्मिन् ।
अनवरतवशाद्विरामुकं
घनचयकञ्चुकसंचयं व्यमुञ्चत् ॥ १७ ॥

भगवति शयनोत्थिते मुकुन्दे
भरविगमेन विसृत्वरैर्विशेषात् ।
फणशतपवनैर्विधूतमभ्रे
फणिपतिकञ्चुकमभ्रवृन्दमूहे ॥ १८ ॥

सरससमभिगच्छदच्छहंसी-
परिषदतुच्छतरच्छदच्छवीनाम् ।
अकुरुत पुनरुक्तिमम्बरान्ते
सिततरशारदवारिवाहलेशः ॥ १९ ॥

जगति विचलता जनाधिपानां
विजयरमापरिणीतिविभ्रमाय ।

शितघनपटलेन सिद्धमार्गे
खचयवितानचमत्क्रिया सिषेवे ॥ ४० ॥

प्रथममतितृषा पयः प्रपीतं
कटुलवणाम्बुनिधेर्घना वमन्तः ।
पुनरमरपुरापगाम्बु पीत्वा
पुपुषुरमी वपुषा नु पाण्डिमानम् ॥ ४१ ॥

घनशिखिविहितस्रजाभिशान्त्यै
प्रथमकृताम्बुदनीलपट्टबन्धम् ।
अतनुत नभसः क्रमादनेहा
सितघनकेतवस्त्रपट्टबन्धम् ॥ ४२ ॥

खरकिरणकरोत्करैः कठोरै-
रधिगतमूर्छनमम्भसाभिषिच्य ।
स्वयमथ नभसः सिताभ्रखण्डैः
सपदि विलिप्य विलिम्पदर्कं नूनम् ॥ ४३ ॥

सकृदपि भजति स्म नो वियोगं
समधिकमुत्कलिकाकुला पुरा या ।
अभजत न पतिं नदी तथासा-
वपगतभूरिरसा शरद्दशेन ॥ ४४ ॥

अभवदधिकपङ्किलापि पृथ्वी
सुगमतमा सुमधूलिभिर्जपानाम् ।
पुनरजनि च दुर्गमा प्रफुल्ल-
स्खलनलिनीगलितैर्मधूलिपूरैः ॥ ४९ ॥

रुचिरशुकावलीललितरोमलताकलितां
विकसितनीलनीरजवितीर्णवर्तनविधिम् ।
प्रविनवबन्धुजीवविलसत्तिलकां शरदं
प्रभुरभिनन्दति स्म दयितामिव वामपराम् ॥

इति श्रीदग्निसोमोतिदिवाकदीपाङ्गुमव्यमण्डलान्तरत्नखेटश्रीनिवासदीक्षित-
तनयस्य कामाक्षीगर्भसंभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरण-
सहजतालब्धविद्यावैशारद्यस्य श्रीराजचूडामणिदीक्षित-
स्य कृतिषु रुक्मिणीकल्याणनाम्नि काव्ये
नवमः सर्गः ॥

# दशमः सर्गः ॥

वहतु यौवनदृप्तवलोदरी-
कुचगिरीन्द्रकुडुम्बिमहोष्मभिः ।
रजनिपुष्टिविधिकरसायने-
रजनि कामिजनानुगुणैर्दिनैः ॥ १ ॥

हिमकृतं किल हीनबलं पुरा
समुपलभ्य पुनः सहसा धृतिम् ।
नलिनषट्पदमकरन्द मधान्धवं
न हि जगत्पतयो नियतस्थिती ॥ २ ॥

हिममुदीक्ष्य हिमाचलगोचरं
दिनमणौ दिशमेयुषि दक्षिणाम् ।
पुनरदो भुवनानि समावृणो-
दुपचयं भजतेऽरिरुपेक्षितः ॥ ३ ॥

तुहिनशीतलवातपरम्परा-
रसमवेपितरध्यगतो रविः ।

निववृते नियतं मलयाचलो-
   ल्लसदहीन्द्रगरोष्मलिते पथि ॥ ४ ॥

शमनसैरिभदर्शनकातर-
   त्वरथसैन्धवसत्वरचङ्क्रमैः ।
द्रुततरं किमु दक्षिणदिङ्मुखो-
   द्गतिरतानि गभस्तिमता तदा ॥ ५ ॥

विहितसाहसवृत्तिभिरञ्जसा
   बत तुषारभरैर्बलवत्तरैः ।
पतिमवेक्ष्य पराजितमादधे
   किमु शुचा कृशतां दिवसश्रिया ॥ ६ ॥

मिहिकया बहुधा कलिताश्रया
   मिलितमेक्ष्य पतिर्नियतं निशा ।
अधित मानमतीव सुदुःसहं
   प्रणयिनः परया ननु मेलनम् ॥ ७ ॥

परिभवादहहा तुहिनाद्दिवा-
   स्प्रणयिनीरपि रक्षितुमक्षमः ।
भयवशान्नियतं नलिनीपतिः
   प्रसभमभ्रपथे प्रपलायत ॥ ८ ॥

प्रगुणवेगपतत्तुरङ्गम-
प्रकरपादपुटादविचूर्णितम् ।
विशदमभ्रकुलं वियदध्वनि
ध्रुवमलक्षि तुषारभरात्मना ॥ ९ ॥

प्रचितकोशशता परितःस्फुर-
त्प्रचुरपत्त्ररथापि पयोजिनी ।
क्षयमियाय हिमैः क्षणतस्तदा
जलकृताभिरतेः क जयो भवेत् ॥ १० ॥

अतिकठोरतरातपनिर्वृता
कमलिनी कणिकामपि हैमनीम् ।
अधिकशीतलिमानममोद नो
पतिहितं हि भवेत्प्रमदाहितम् ॥ ११ ॥

कुमुदिनी तुहिनांशुकुटुम्बिनी-
महिमधामवधूमपि पद्मिनीम् ।
तुहिनभाशु तुतोद समं तदा
भवति किं नु जडे स्वपरज्ञता ॥ १२ ॥

अतिगभीरहृदोऽपि महाह्रदाः
कमलिनीविरहाधिककातराः ।

बहलजृम्भितबाष्पपरिप्लुता
चमुरहो बत नेह यथापुरम् ॥ १३ ॥

प्रतिवधूरवधूततमा हिमैः
प्रसभमेव समीक्ष्य पयोजिनीः ।
प्रणयिनं परिरभ्य दृढं प्रभा
प्रकटतामभजन्न भयादिव ॥ १४ ॥

प्रतिषिकाकपटव्रजसुभ्रुवा-
मपहरन्नचिराद्वलशाटिका- ।
किमपि कुन्दमहीरुहकोटिका-
मकृत नन्दसुतस्तुहिनागमः ॥ १५ ॥

निखिलपुष्पनिराकृतिनिष्ठुरे
स्फुरति भूरितुषारभरे तदा ।
कुसुममेकमराजत कुन्दजः
समरुचौ सकलं किल मोदते ॥ १६ ॥

अखिलवङ्कसुमं हिमशीकरा-
मलिततिर्जहती परमागिनः ।
त्रिचतुरानपि वल्लपिता मधु-
भ्रमवती नवकुन्दसूवान्पुनः ॥ १७ ॥

सहृदयेषु सरोरुहकोरके-
  ष्वधिगतेषु विपत्तिमनेहसा ।
किमपि तापमवाप कृशोदरी-
  कुचसरोरुहकुड्मलसंचयः ॥ १८ ॥

सुचिरमूष्मभिया सुदृशां कुच-
  क्षितिधरं किल हारलता श्रिता ।
अवरुरोह समानरुचौ हिमे
  विभवशालिनि वीतभयोदया ॥ १९ ॥

प्रथममेव सरन्ध्रतया हिम-
  प्रहतयो नवहारमणिगणाः ।
किमु जिता हिमवैरिभिरूष्मभिः
  कुचतनुत्रनदुर्गगुणं जहुः ॥ २० ॥

हरितमीरयमूष्मलिमा हिमा-
  त्स्फुटितकंचुकदुर्गमुपाश्रितः ।
तदभिरोहभिया तरसा युवा-
  मकृत हारमयीमधिरोहिणीम् ॥ २१ ॥

किमभिवंचयपर्वनगंधव
  स्तनतटीपटनाणरवा स्फुटेन् ।

इति विचिन्त्य हृदि प्रमदाजनः
परिजहौ निजहारपरम्पराम् ॥ २२ ॥

सपदि हन्त हिमं सरसीरुहां
सकलमाकलयत्कुलमाकुलम् ।
प्रणयति स्म मुहुर्वरवर्णिनी-
वदनवारिजमोहरलाञ्छने ॥ २३ ॥

प्रकटितोल्बणधूममनेकधा
प्रथममाहितकोप इव ज्वलन् ।
अधिहसन्त्यभियुष्य शिखी हिमे-
रजनि हापितहेतिरसंशयम् ॥ २४ ॥

उरसिजेष्विव पक्ष्मलचक्षुषा-
मुदयते दहनेषु किमुष्णिमा ।
इति विवेक्तुमिवादरतः करा-
न्विदधिरेऽधिहसन्ति विलासिनः ॥ २५ ॥

निजसखानि निरीक्ष्य सरोरुहा-
ण्यपहृतानि करो युवतीवतेः ।
अहह शोकवशेन हसन्तिका-
मवलपातकृते किमसेवत ॥ २६ ॥

समय एष हठेन सरोरुहा-
मपहरन्नखिलामपि संपदम् ।
अहह तत्सुहृदोऽपि वधूकरा-
नधिहसन्ति नितान्तमतापयत् ॥ २७ ॥

हिमभिया किमु मित्रहृतं वधू-
शयनिभं नलिनं शरणागतम् ।
चिरमपालयदेष शिखाबल-
स्तदुचितं ननु तत्र धनंजये ॥ २८ ॥

अनुदिनं यदमुं वसुसंचये-
रनलमम्बुजप-धुरवर्धयत् ।
हृदि विधाय सदैव हिमाद्वधू-
करनिभं कमलं किमपालयत् ॥ २९ ॥

अथ विहङ्गिवशाटिपटीमदै-
हंसितगर्भगृहोदरसंमदैः ।
अधिकशीतकपाटसमुद्भवै-
रजनि शैशिरवासरवैभवैः ॥ ३० ॥

शिशिरमारुतशीकरविव्यथः
सरभसं सकलोऽपि तदा जनः ।

अधिहसन्ति करार्पणपूर्वकं
शरणमाप सखायममुष्य किम् ॥ ३१ ॥

स्तनगिरौ परिरक्ष्य तवोष्णतां
प्रतिदिशानि पुनः समयेष्विति ।
अभयदानमिवादधती वधू-
रभिकृशानु ततान कराम्बुजम् ॥ ३२ ॥

शिशिरवातभिया किल शीतता
शिव शिव श्रयति स्म शिलाबलम् ।
अमुमदोभयतो मृगलोचना-
कुचगतोष्मलिमानमवैक्ष किम् ॥ ३३ ॥

शिशिरवातविजृम्भणजां रुजं
शिथिलतामुपनेतुमना मनाक् ।
अधिहसन्त्यनलोऽपि समन्ततो
भक्षितदिग्धतनुर्भवति स्म किम् ॥ ३४ ॥

परिचिता सुचिरं परिमुच्य मां
हिमभयादियमूष्मलता गता ।
इति वियोगवशादिव पाण्डुता-
मधित हव्यवहो भसितच्छलात् ॥ ३५ ॥

शिव शिव द्विगुणां शिशिरव्यथा-
मपटुरस्म्यपनेतुमिति ह्रिया
अधिहसन्त्यनलो भसितच्छला-
दधिकपाण्डुरजायत तत्क्षणात् ॥ २६ ॥

धनुषि पुण्ड्रमये दलिते गुणे-
ऽप्यलिगणे विशिखेऽपि सुमोत्करे ।
सघृणिते शिशिरेण मनोभवो
जगदिदं जयति स्म तपोबलात् ॥ २७ ॥

निजपतिं प्रसमीक्ष्य तपःस्थितं
दिनततिः कृशतामभजद्द्रुतम् ।
अधित वृद्धिमतीव विभावरी
पुनरुदञ्चितभूरितमोगुणा ॥ २८ ॥

तपसि बादरवल्कलधारिणः
शिशिरमारुतभेषजतत्पराः ।
किमिह माधवसंनिधये नगा
प्रसमपर्णतया विदधुस्तमाम् ॥ २९ ॥

वेलाविलङ्घिविषमाम्बुधवीरवार-
कोलाहलायितदुन्दुभिसपूजितेन ।

प्रालेयजालपटिमच्छिदुरेण पश्चा-
त्कालेन केनचिदभूयत कोमलेन ॥ ४० ॥

वल्लीवधूर्विततयः प्रथमर्तुहृद्याः
संचिन्त्य दक्षिणसमीरणसंनिकर्षम् ।
जीर्णच्छदच्छलमपास्य जरत्पटं किं
नव्यप्रवालवसनं परिधातुमैच्छन् ॥ ४१ ॥

अन्तः प्रवालमथ दक्षिणगन्धवाह-
सांगत्यमेत्य सकला लतिका दधत्यः ।
पत्रावलीपरिचयं च चिराज्जहत्यः
किंचित्समुच्छ्वसितता क्रमशोऽधिजग्मुः ॥ ४२ ॥

उद्यानसीमनि नवप्रसवोन्मुखीषु
वल्लीमतल्लिकुहनावरवर्णिनीषु ।
आरादलिद्विजकुलान्यजपन्नमन्दं
मन्त्राक्षराणि मदनागमचोदितानि ॥ ४३ ॥

सद्यःप्रसूतसमयार्भकपादलिप्त-
प्रत्यग्रकुङ्कुमपचेलिमरागमये ।
वल्लीषु पल्लवपटान्तमुदञ्चयन्ती-
र्व्यामोदमन्थरतरोऽजनि गन्धवाहः ॥ ४४ ॥

आरामसीमसु नगाः प्रसमीक्ष्य किं नु
वल्लीभुधावरतनूः प्रसवोपपन्नाः ।
व्याकीर्णकौसुमरजोनिभगन्धचूर्णा-
व्यात्युक्षिकां विदधिरे मधुपारिपूरैः ॥ ४५ ॥

प्रायः पचेलिमतपःस्थितिपारवश्या-
त्पर्णावलीष्वपि परं दधतामनास्थाम् ।
मन्दानिलो वनमहीषु महीरुहाणां
वृन्दानि तानि दरमाश्वसितानि चेने ॥ ४६ ॥

संत्यज्य पर्णमपि साधु तपःस्थितानां
शाखाशिरोभुवि महीरुहमंडलीनाम् ।
क्रीडावलीषु किसलच्छलवाङ्कुरन्वी-
व्यहाय संनिधिमधात्सुमनःसमूहः ॥ ४७ ॥

अग्रे प्रतापवदुदयत पल्लवश्रीः
शान्तस्ततः समजनिष्ट कुहूमिषेण ।
पुष्पोर पुष्परजसाय चमूपरागो
जेतुं व्यवस्यति जगन्ति मनोजवीरे ॥ ४८ ॥

माराधनीपतिमणेर्मधुमासमन्त्री
वीरस्य विश्वविजयोत्सवपुण्यकाले ।

पुङ्खानुपुङ्खपरपुष्टरवापदेशा-
स्तुण्याहघोषमुदजृम्भयतानुवेलम् ॥ ४९ ॥

मन्ये तपस्यदिवसैर्मधुवासराणां
सीमाविवादशमनार्थमिहान्यपुष्टाः ।
ताम्राम्रबालदलतल्लजकैतवेन
जिह्वाञ्चलैश्चिरमधुः परशुं प्रतप्तम् ॥ ५० ॥

प्राप्तं वसन्तसमयं प्रमदावनेभ्यः
संवेद्य पञ्चमचमत्क्रियया सहर्षम् ।
संपूर्णरागसहकारदलापदेशा-
त्किं पूर्णपात्रमलभन्त वसन्तघोषाः ॥ ५१ ॥

वामभ्रुवां दशनवाससि शीतवात-
संजातवेदनतया श्लथरागबन्धे ।
प्राप्यावकाशमिव पल्लवमुल्लसन्तं
प्रायोऽगिरन्परभृता वशगास्तदुक्तेः ॥ ५२ ॥

सत्तमवालकवनितारतमीविवेक-
कौतूहलादिव कुहूमुखबाललोकाः ।
संगृह्य चूतमुखपल्लवतल्लजानि
चञ्चूपुटेषु चतुरं प्रविशान्ति चेदः ॥ ५३ ॥

सौरभ्यसान्द्रसुमनःपवनाङ्कुरादौ
    यूनोः प्रियाय युगपन्मिलितेऽप्यभेदेऽपि ।
आसीन्मिथाधिककृता ननु पद्मजन्मा
    प्रायः समस्तगुणसाक्षिपराङ्मुखः स्यात् ॥५४॥

प्रायः कुहूं परभृतद्विजतः समीपे
    श्रुत्वा निजप्रियपुनर्नरशङ्कितेताः ।
कार्श्यं किलाभजत कान्तवियोगभीभिः
    कान्ताजनस्य हि भवेत्कृशिमैकहेतुः ॥ ५५ ॥

दुर्वारकठोरकरभावमिते प्रयाते
    ज्ञानप्रहासमयमापपुरःप्रवेश ।
प्रांशुप्रभूदयनं परिहृत्य वातः
    सह्ये समाश्रयति दक्षिणभूपरिन्द्रम् ॥ ५६ ॥

भूयोऽपि भूरिविपुलाभकृताभिलाषो
राजन्वतीं रविरगाद्धनदेन काष्ठाम् ॥ ५८

प्रायः कराग्रपरिमर्शनकेलिमिश्र-
प्रालेयसंहृतिदुकूलपटावकुण्ठम् ।
अम्भोजबन्धुरलकाभरणं चिरेण
सुरभं चुचुम्ब मुखमुत्तरदिङ्मृगाक्ष्याः ॥ ५९

मलयमरुत्किशोरदरकम्पितमाधविका-
परिमलपूरदूरपरिमग्नजगन्ति चिरम् ।
मधुदिनवैभवानि मधुसूदन एष दशा
किमपि कृतार्थयन्नवहत कैतकपत्रदृशा ॥६०॥

इति श्रीदक्षिणदिशाप्रदीपायमानकुम्भकोणस्थलरत्नखेटश्रीनिवासदीक्षित-
तनयस्य कामाक्षीगर्भसंभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरण-
सहमतालब्धविद्याविशेषस्य श्रीराजचूडामणिदीक्षि-
तस्य कृतिषु रुक्मिणीकल्याणनाम्नि काव्ये

दशमः सर्गः ॥

समाप्तश्चायं ग्रन्थः ॥

